श्रीगणेशायनमः॥ ॥ऋषयऊचुः॥ ॥मुनिश्रेष्ठाबालखिल्याःसर्वलोकहितेच्छया॥कलौक
लुषचित्तानांलोकानांदीनभाषिणाम्॥१॥ज्ञानविज्ञानहीनानांशिश्नोदरसुखैषिणाम्॥क्षणभंगु
रबुद्धीनांस्वार्थतत्परमानसाम्॥२॥कथंप्रसन्नोभगवान्भविष्यतिजनार्दनः॥श्रुतंचभास्करमु
खात्त्वद्भूतंव्रतमुत्तमम्॥३॥नस्थिरंजायतेचित्तंक्षणमात्रंजपादिषु॥बाह्यपूजासमर्थानामु
द्धारायसुखायच॥४॥इहलोकेपरत्रापियेनपुण्यमवाप्यते॥ ॥बालखिल्याऊचुः॥ ॥सम्य
क्पृष्टंमुनिवरैःकालबुद्धिप्रभंजिताः॥५॥विचरंतिनरामूढानानामार्गोपसेवकाः॥तेषामर्थेभा
स्करेणप्रोक्तंव्रतमनुत्तमम्॥६॥ ॥श्रीभास्करउवाच॥ ॥शृण्वन्तुरोभवंतोऽपिबालखि-
ल्याश्चनारद॥सनकाद्याभवंतोऽपिशृण्वंतुव्रतमुत्तमम्॥७॥मत्सारिभ्रमणेनैवजायतेसचरा
चरम्॥तथैववृद्धिमायातिजायतेऽन्तर्हितंततः॥८॥ब्रह्माविष्णुमहेशाद्यैरेकदाप्रार्थितस्त्वहम्
कथंतवगतिज्ञानंजायतेतद्वदस्वमे॥९॥एवंतैःप्रार्थ्यमानोहिकृताःस्वांगांशसंभवाः॥चत्वार
एवपुरुषायुगरूपामहोज्ज्वलाः॥१०॥तत्राद्यःसात्विकःश्वेतवस्त्रमाल्यविभूषणः॥ज्ञानमुद्रां
करेबिभ्रद्ध्यानस्तिमितलोचनः॥११॥द्वितीयोराजसोजातोदंडपुस्तकधारकः॥दातावदान्यः
शूरश्चकुलजातिविभागकृत्॥१२॥तृतीयस्तामसोहोताप्रणीतापशुधारकः॥पठन्वेदंगीतनृ
त्यकरलोकैःसमावृतः॥१३॥चतुर्थोमदिरोन्मत्तःकराभ्यांलिंगपीडकः॥स्कंधयोर्धृतयुवतिर्ह्री
सघूर्णितलोचनः॥१४॥ ॥श्रीसूर्यउवाच॥ ॥एतान्पृच्छंतुभोदेवाःकारणंमेगतेःखिलम्

उत्पत्तिस्थितिनाशायसर्वेषांपर्यटाम्यहम् ॥१५॥ इत्युक्त्वाभास्करस्तूर्णंमेदिनींतांव्यगाहयत् ॥ ब्रह्मा
द्याःपरिपप्रच्छुःकृतंज्येष्ठंशनैःशनैः ॥१६॥ ॥देवाऊचुः॥ ॥कथंश्रीभास्करगतिःकथंकालांशकोभ
वान् ॥कएषवेषःकिंकार्यंतत्त्वयातूर्णमुच्यताम् ॥१७॥ ॥कृतउवाच॥ ॥संसृष्टोऽसियदारभ्यब्र
ह्मंस्तद्दिवसादितः॥ प्रयुतेकंसप्तलक्षंद्व्ययुतंचाष्टसंज्ञकम् ॥१८॥ सहस्रंसौरवर्षाणांप्रेर्यंतेतुमया
जनाः॥ध्यानायतपसेज्ञानमोक्षसाधनकर्मणि॥१९॥ मयिनास्तिनरःकोपिस्वल्पायुश्चिंतयान्वितः
ब्रह्मनिष्ठानराःसर्वेरविमंडलभेदिनः॥२०॥ ॥त्रेतोवाच॥ ॥एतस्मादुत्तरश्चाहंत्रेतोनामम
हाबलः॥नृणांस्फुरत्वकरोत्यर्थंभ्रातृधर्मविनाशकः॥२१॥ मयावर्णव्यवस्थात्रजातिभेदाःपृथक्पृथ
क्॥उत्पादिताराजनीतिःसौख्यानिविविधानिच॥२२॥ उच्चावचास्तथाधर्माभ्रातृधर्मविनाशकाः
प्रयुतेकंद्विलक्षंचनवसंख्यायुतानिच॥२३॥ षट्सहस्राणिमेमानंबुद्धिंसंप्रीणयाम्यहम् ॥ ॥द्वाप
रउवाच॥ ॥शृण्वंतुदेवामद्वाचोसुगानासुत्तमंसुगम्॥२४॥ द्वापरंनामविख्यातंनानासौख्यप्रदा
यकम्॥लक्षाणामष्टकंदेवाःषट्संख्यान्ययुतानिच॥२५॥ सहस्राणांचतुष्कंचमत्कालस्यप्रमाण
ता॥ अहंबुद्धिंप्रवक्ष्यामिसर्वेषांस्फुरत्वहेतवे॥२६॥ जैमिनेस्तुस्वरूपेणकर्ममार्गःप्रकाशितः॥ वर्णभेदः
कृतोभ्रातासर्वेषांजीवनेविधिः॥२७॥ विचारितस्तुतेनांतोमयाधर्मःप्रकाशितः॥ नामसाम्बभविष्यं
तिमद्रूपास्तुसहस्रशः॥२८॥ अन्योन्यतःशिरश्छेदाद्यास्यंतिविलयंध्रुवम्॥भ्रातृणांचैवसर्वेषामहं १
ज्येष्ठोस्मिदेवताः॥२९॥ कलिरुवाच॥ ॥हाधिक्कष्टंकर्णकटुप्रोच्यतेभ्रातृभिःकथम्॥मन्माहात्म्य

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

मजानद्भिरज्ञानैर्बुद्धिवर्जितैः॥ ३०॥ एतद्धर्मैर्विहीनोहंकलिः सत्यविवर्जितः॥ व्ययुतंचचतुर्लक्षंसहस्र-
द्वितयंतथा॥ ३१॥ मत्कालपरिमाणंतुप्रेरयामीदृशीं धियम्॥ परस्त्रीगमनेद्यूतेचौर्येछद्मनिकूटके॥ ३२
॥ पैशून्येद्रव्यलोपेचमद्यमांसादिभक्षणे॥ सर्वेलोकाजारजाताः शिश्नोदरपरायणाः॥ ३३॥ वाममा
गेरतामातृभगिनीभोगकारकाः॥ मयिस्वल्पायुषोलोकाबहुधाविधवांगनाः॥ ३४॥ वार्धकेबहुधा-
सर्वेनिर्धनारोगसंयुताः॥ ब्राह्मणाःशूद्रकर्माणः शूद्राब्राह्मणवृत्तयः॥ ३५॥ युद्धकूटाःसर्वजनाःपतिं
त्यक्ष्यंतिसंगरे॥ स्वल्पेनहेतुनानार्योभर्तृत्यागविधायकाः॥ ३६॥ जातिवंध्याःकाकवंध्यामृतवंध्याभ
वंतिच॥ विद्यालक्ष्मीकलाद्याश्चनीचेष्वेवरमंतिच॥ ३७॥ दासीभोगरतालोकाः परित्यज्यकुलस्त्रिय
म्॥ एवंधर्मंकरिष्यामिचातुर्धर्मविनाशकम्॥ ३८॥ एतन्ममस्वरूपंतु योजानातिसपंडितः॥ सर्वध
र्मपरित्यक्तंमांजानीतयुगंकलिम्॥ ३९॥ ॥देवाऊचुः॥ ॥कलेत्वत्समोनास्तिकश्चिच्चित्तवि-
मोहकः॥ किंचिद्व्रतंवादानंवायेनमुक्तोभवेज्जनः॥ ४०॥ कृपांकृत्वावदक्षिप्रंविष्णुलोकंव्रजेद्यथा॥-
कलिरुवाच॥ ॥अनूरुंवदतापोक्तंभास्करेणश्रुतंमया॥ ४१॥ मय्यपिस्वर्गगमनकारणंश्रूयतां
हितत्॥ ॥सूर्यउवाच॥ ॥द्वादशानांतुमासानांमार्गशीर्षोतिपुण्यदः॥ ४२॥ तस्मात्पुण्यफलः
प्रोक्तोवैशाखोनर्मदातटे॥ ततोलक्षगुणःप्रोक्तःप्रयागेमाघमासकः॥ ४३॥ तस्मान्महाफलःप्रोक्तः-
कार्त्तिकोजलमानवैः॥ एकतःसर्वदानानिव्रतानिनियमास्तथा॥ ४४॥ एकतःकार्तिकस्नानंब्रह्म
णातुलयाधृतम्॥ संततिश्चैवसंपत्तिःकलौयेषांप्रदृश्यते॥ ४५॥ अवश्यंतैःकृतंविद्धिकार्त्तिकस्ना

नमादरात्॥स्नानंचदीपदानंचतुलसीवनपालनम्॥५६॥भूमिशय्याब्रह्मचर्यंतथाद्विदलवर्जनम्॥विष्णु
संकीर्त्तनंसत्यंपुराणश्रवणंतथा॥५७॥कार्त्तिकेमासिकुर्वंतिजीवन्मुक्तास्तएवहि॥नकार्त्तिकसमंधर्म्यं
मर्थ्यन्नोकार्त्तिकात्परम्॥५८॥नकार्त्तिकसमंकाम्यंमोक्षदानंनकार्तिकात्॥युधिष्ठिरेणधर्मार्थमर्था
र्थंचध्रुवेणच॥५९॥श्रीकृष्णेनतुकामार्थंमोक्षार्थंनारदेनच॥कृतमेतद्व्रतंतस्माच्छ्रेष्ठंकृष्णप्रियंच
हि॥५०॥ ॥इतिसनत्कुमारसंहितायांकार्त्तिकमाहात्म्येप्रथमोऽध्यायः॥ ॥अरुणउवाच॥ ॥
ब्रूहिभास्करसर्वात्मन्कदारभ्यव्रतंकृतम्॥सफलंजायतेसम्यक्काचपूज्यात्रदेवता॥१॥ ॥भास्क
रउवाच॥ ॥अहंविष्णुश्चशर्वश्चदेवीविघ्नेश्वरस्तथा॥एकोहंपंचधाजातोनाट्येसूत्रधरोयथा॥२
अस्माकंसर्वएवैतेभेदाविद्धिखगेश्वर॥तस्मात्सौरैश्चगाणेशैःशाक्तैःशैवैश्चवैष्णवैः॥३॥कर्त्तव्यं-
कार्त्तिकस्नानंसर्वपापापनुत्तये॥सूर्यस्यप्रीतयेकार्यंतुलासंस्थेदिवाकरे॥४॥इषपूर्णांसमारभ्य
यावत्कार्त्तिकपूर्णिमा॥तावत्स्नानंविधातव्यंशिवसंतुष्टयेनरैः॥५॥देवीपक्षंसमारभ्यमहारात्रिचतुर्द
शी॥तावत्स्नानंविधातव्यंदेवीसंप्रियतामिति॥६॥गणपक्षंसमारभ्यकृष्णायाकार्त्तिकेभवेत्॥चतु-
र्थीतावदेवस्यात्स्नानंगणपतुष्टये॥७॥एकादशींसमारभ्यआश्विनस्यासितेतराम्॥एकादश्यांकार्त्ति
कस्यशुक्लायांपरिपूर्यते॥८॥कृतंयेनतुतस्यस्यात्परितुष्टोजनार्दनः॥नकार्त्तिकसमोमासोनका-
शीसदृशीपुरी॥९॥नप्रयागसमंतीर्थंनदेवःकेशवात्परः॥प्रसंगाद्वाबलात्कारैर्ज्ञात्वाज्ञात्वाकृतंभवे 
त्॥१०॥स्नानंकार्त्तिकमासस्यनपश्येयमयातनाम्॥स्नानार्थंचेन्नसामर्थ्यंदत्वान्यस्मैधनादिकम्

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

॥११॥स्नातस्यतस्यहस्तस्यग्रहणात्पुण्यभाक्भवेत्॥अथवाकार्त्तिकस्नानंये कुर्वंतिद्विजातयः॥१२॥
तेषांप्रावरणंदत्वास्नानजंफलमाप्नुयात्॥राधादामोदरःपूज्यःकार्त्तिकेतुविशेषतः॥१३॥स्वर्णस्यवाथरौ-
प्यस्याप्यभावेशुल्वजामपि॥मृज्जांवाचित्रजातांवाथवापिष्टविचित्रिताम्॥१४॥दामोदरस्यराधायाः
स्तुलस्याधोर्चयंतिये॥मूर्त्तितेस्युनराज्ञेयाजीवन्मुक्तानसंशयः॥१५॥अपिपापसहस्राढ्यःकार्त्तिक-
स्नानतोनरः॥मुक्तोवश्यंसभवतिनात्रकार्याविचारणा॥१६॥कृतंयैःकार्त्तिकेमासिदीपदानंविधान-
तः॥दृश्यंतेयेरलभाजस्तेतएवप्रकीर्त्तिताः॥१७॥योवेदाभ्यासिने दद्याद्दीपार्थंतैलमादरात्॥कोवात-
स्यफलंवक्तुंभुविविष्ठतिमानवः॥१८॥दीपदानासमर्थश्चेत्परदीपंतुरक्षयेत्॥तुलस्यभावेकर्त्तव्यापूजा
धात्रीतलेखग॥१९॥सुरव्यपूजाविधानंतुकर्त्तव्यंसूर्यमंडले॥अप्रत्यक्षाःसर्वदेवाःप्रत्यक्षोभगवानयम्
॥२०॥सर्वेषामेवनेत्रोयंजगज्जीवयतेसृतम्॥एतदंशसमुद्भूतारुद्राद्याःसर्वदेवताः॥२१॥प्रत्यक्षोभगवा
नीशश्चतुर्वेदेषुगीयते॥सर्वेदेवाःकालवशाःकालकालोदिवाकरः॥२२॥एतस्यमंडलेपूज्याःसर्वदेवाः
प्रयत्नतः॥एतदाराधनेशक्तःप्रतिमांपूजयेन्नरः॥२३॥प्रतिमातोधिकंपुण्यंब्राह्मणस्यतुपूजने॥अवि-
द्योवासविद्योवाब्राह्मणोमामकीतनुः॥२४॥प्रायःकलियुगेविप्राःशूद्राचारपरायणाः॥वाममार्गगताः-
प्रायःसंध्यास्नानविवर्जिताः॥२५॥ईदृशाअपिसंपूज्याब्रह्मबीजसमुद्भवाः॥महादुर्गंधयुक्तोपिगुण
वत्वात्सुसेव्यते॥२६॥यथारसोलशुनजोद्विजाःपूज्याःप्रयत्नतः॥रुद्रशापवशाद्भावोविष्ठाभक्षणत
त्पराः॥२७॥तथापिताःपूजनीयालोकद्वयफलप्रदाः॥ब्रह्मबीजेष्वपिश्रेष्ठोकृतोपनयनस्तुयः॥२८॥

तस्माच्छ्रेष्ठतरःसंध्यांयःकरोतिद्विजोत्तमः॥ततोप्यधिगुणोज्ञेयोयःस्नानंकुरुतेद्विजः॥ २९॥उत्कृष्टस्तुततो-
ज्ञेयःस्यात्स्वाचारेणसंयुतः॥ततोप्यधीतशास्त्रस्तुवेदवेत्तानतोपिच॥ ३०॥वेदार्थवित्ततःश्रेष्ठःसदाचा
रपरायणः॥अपरान्नरुचिःस्वस्त्रीनिरतःक्रोधवर्जितः॥ ३१॥मध्यान्हेप्रयतःसंध्यांयःकरोतिद्विजो-
त्तमः॥अयाचितव्रतोहोमीदेवब्राह्मणपूजकः॥ ३२॥विभज्याशीःसत्यवादीद्विजोयत्रतुतिष्ठति॥क-
लिकालोपसर्गाद्यास्तत्स्थलेनविशंतिहि॥ ३३॥तस्मात्सर्वप्रयत्नेनकार्त्तिकेद्विजमर्चयेत्॥दरिद्रोदा
नपात्रंस्याद्विद्यावांस्तुविशेषतः॥ ३४॥मोक्षायैकाकिनेदद्याद्दानंद्रव्यच्युतायच॥सपत्नीकायधर्मार्थं-
विशेषेणकुटुंबिने॥ ३५॥यत्सेवाकारिणेदत्तंदत्तंवार्धुषिकायच॥दासीशायचयद्दत्तंयद्दत्तंछद्मकारि
णे॥ ३६॥तीर्थप्रतिग्राहिणेचयद्दत्तंतीर्थभोजिने॥धनुर्धरायचयद्दत्तंदत्तंयत्सेतभोजिने॥ ३७॥वैद्यविद्या
जीविनेचतथानक्षत्रसूचिने॥ईदृशेदीयतेदानंयेनासौनरकंव्रजेत्॥सर्वत्रपूजयेद्विप्रंसपत्नीकंस्व
गोत्तम॥विप्राभावेपूजनीयागावःकृष्णामनोहराः॥ ३९॥कपिलागोषुचश्रेष्ठातदभावेतुपिंगला॥
तदभावेसितातस्याअभावेचसितेतरा॥ ४०॥तदभावेचयाकाचिद्दोग्ध्रीवत्सेनसंयुता॥विष्णोर्मूर्त्तिर्जंगम
तःस्थावरात्तुप्रशस्यते॥ ४१॥शूद्रस्थापितमूर्त्तीनांनमस्कारंकरोतियः॥पितृभिर्निरयंयातिदशपूर्वैर्दशा
परैः॥ ४२॥शूद्रार्चितस्यसंस्पर्शाद्दहेदासप्तमंकुलम्॥तस्माद्विचार्यविप्रैर्यास्थापितातांसमर्चयेत्॥ ४३॥
ततोपियादेवताभिःकृतासाभुक्तिमुक्तिदा॥मूर्त्यभावेपूजनीयोऽश्वत्थोवाथवटोथवा॥अश्वत्थरूपीवि- ३
ष्णुःस्याद्वटरूपीशिवोयतः॥ ४५॥कार्त्तिकेतुलसीशाकंतांबूलंयोनराधमः॥अज्ञानात्ज्ञानतोवापिभुं-

जानोनिरयंव्रजेत्॥ ५५॥ धात्रीछायातले येन सकृद्भुक्तंतु कार्त्तिके॥ दंपतीभोजनं तत्र मन्वंतरेण मुच्यते॥ ५६
संपूर्णकार्त्तिके यस्तु संपूज्या मलकीं शुभाम्॥ राधादामोदरप्रीत्यै भोजनीयौच दंपती॥ ५७॥ पश्चात्स्वयंतु भुं-
जीत न श्रीस्तस्य क्षयं व्रजेत्॥ शालग्रामशिलाचक्रे नित्यं संनिहितो हरिः॥ ५८॥ तस्मात्सर्वप्रयत्नेन शाल
ग्रामं प्रपूजयेत्॥ ५९॥ इति सनत्कुमारसंहितायां कार्त्तिमाहात्म्ये द्वितीयोऽध्यायः॥ २॥ ॥ ऋषय ऊचुः॥
शिवस्य किं कृतं गोभिः शप्तास्ताः केन हेतुना॥ उत्कंठा जायते स्माकं वालखिल्या ब्रुवंतु नत्॥ १॥ वालखिल-
ल्या ऊचुः॥ ॥ एकदा हंसमारुह्य विधाता समुपागतः॥ कृत्वा चतुर्विधां सृष्टिं तत्कौतुकसमुत्सुकः॥ २॥ प
श्यन्हिमालयं दिव्यं नानामृगसमन्वितं॥ गंगादिकसरिद्भिश्च प्लाव्यमानमितस्ततः॥ ३॥ नानाऋषिग-
णाकीर्णं सिद्धगंधर्वसेवितम्॥ पक्षिणां कलनिर्ह्रादैर्मोहयंतं श्रुतिद्वयं॥ ४॥ नानापक्षिगणाकीर्णमगम्यंच
क्वचित्क्वचित्॥ क्वचिद्रुद्रश्रियं बिभ्रद्धिमेन भरितं क्वचित्॥ ५॥ मेघसंसर्गतः श्यामं छायया मेघजा नया॥
पश्यन्स कौतुकं दिव्यं गंगाद्वारमुपागमत्॥ ६॥ तत्रापश्यन्नृषीन्सर्वान्कार्त्तिकस्नानतत्परान्॥ विष्णु
भक्तिपरान्श्रेष्ठान्राधादामोदरार्चकान्॥ ७॥ वासुदेव जगन्नाथ हरे विष्णो जनार्दन॥ इत्यादिनामब्रु
वतो दृष्ट्वा कोपसमन्वितः॥ ८॥ ॥ ब्रह्मोवाच॥ ॥ इह दुर्बुद्धिता कस्माद्भवतां समुपस्थिता॥ पितामहं प
रित्यज्य कोन्यदेव उपास्यते॥ ९॥ अहं सर्वस्य जगतः कर्त्ता मां त्यज्य भूतले॥ आराध्यते तद्धि ध्वनौ चेत्का
पं ददाम्यहम्॥ १०॥ वसुंधराभवं तस्य नाशनीया मया ध्रुवम्॥ ॥ वालखिल्या ऊचुः॥ ॥ इति ब्रह्मवचः
श्रुत्वा भक्तास्ते ऋषिसत्तमाः॥ ११॥ ध्यायंतश्च मनसा विष्णुं प्रत्यक्षोभूज्जनार्दनः॥ ॥ विष्णुरुवाच॥ ॥ निमि

त्तमात्रंत्वंब्रह्मन्विश्वस्यास्यतुपालकः॥१२॥नारायणःसोत्रविप्रैःपूज्यतेकार्त्तिकेसदा॥ ॥ब्रह्मोवाच॥ ॥
अहंपितामहःसाक्षाद्विश्वकर्त्ताजगद्गुरुः॥१३॥पूज्योस्मिसर्वलोकानांवेदानामितिसंमतम्॥ ॥वालखि
ल्याऊचुः॥ ॥एवंतयोर्विवदतोर्नकस्यापिपराजयः॥१४॥तदाविष्णुरुवाचेदंब्रह्मन्शृणुवचोमम॥आव-
योर्यच्चमाहात्म्यंसामर्थ्यंयत्तदावयोः॥१५॥महेशोवेत्तितत्तत्त्वंतत्रन्यायोस्तुचावयोः॥ब्राह्मणास्तुतये-
त्युक्त्वाजग्मतुःकाशिकांप्रति॥१६॥प्रणिपत्यमहादेवंब्रह्मावचनमब्रवीत्॥ ॥ब्रह्मोवाच॥ ॥देवाकर्णे
यविश्वस्यकर्त्ताहंचपितामहः॥१७॥मदाज्ञानुचरोविष्णुःकथंपूज्योभविष्यति॥ ॥विष्णुरुवाच॥ ॥दे
वदेवमहादेवसदाधर्मासनस्थित॥१८॥कःश्रेष्ठआवयोर्मध्येसत्यंब्रूहिजगत्प्रभो॥ ॥शिवउवाच॥ ॥
एतन्ममममहालिंगंकियदूर्ध्वंतलेकियत्॥१९॥योज्ञास्यत्येतदंतंसलोकेपूज्योभविष्यति॥तस्मादेकत्रयाहि
त्वंब्रह्मन्विष्णोत्वमेकतः॥२०॥एतद्वचःसमाकर्ण्यवेधाश्चोपरिसंययौ॥अधस्ताच्चगतोविष्णुर्ययोपंचशतं-
समाः॥२१॥विश्रांतःखेदखिन्नश्चनप्राप्तोंतस्तुतस्यच॥पुनःपरावृत्ययर्योप्रणमत्रुद्रमादरात्॥२२॥
॥रुद्रउवाच॥ ॥कथमंतोस्तिलिंगस्यकथ्यतांमधुसूदन॥कियद्भिर्दिवसैःप्राप्तःकिंचिन्हंतत्रविद्य
ते॥२३॥ ॥विष्णुरुवाच॥ ॥खेदखिन्नोस्मिभगवन्गताःपंचशतंसमाः॥सप्तपातालमुद्भिद्य
तथाब्रह्मांडगोलकम्॥२४॥भास्कररस्यातपोनास्तिततोप्यग्रेगतोस्म्यहम्॥तेजोरूपस्यलिंगस्यपारःप्रा
प्तोमयानतु॥२५॥इतिश्रुत्वावचस्तस्यतूष्णींभूयव्यवस्थितः॥ब्रह्मावर्षसहस्राणिययावूर्ध्वंसुदुःखि
तः॥२६॥विचारयन्मनस्येवंकिंकर्त्तव्यंमयाधुना॥विष्णुनांतोयदाप्राप्तस्तदाश्रेष्ठोभविष्यति॥२७॥नप्राप्त ५

श्चेत्तदातुल्यौजायेतांनौशिवाज्ञया॥ तस्माच्छ्रयत्करिष्यामि यथास्यांलोकपूजितः॥२८॥ इतिनिश्चित्य
मनसाकामधेनुमभाषत॥ कामधेनोविधाताहंसाहाय्यंममशब्दतः॥२९॥ त्वयाकार्यंसर्वथैवनोचेच्छा
पंददाम्यहम्॥ अत्रसहाय्यंकर्त्रीचित्वंभविष्यसिशोभने॥३०॥ तदामनोरथान्पूर्णांस्तेकरिष्यामिसत्व-
रम्॥ ॥धेनुरुवाच॥ ॥भवान्यदाज्ञापयतितत्सर्वंकरवाण्यहम्॥३१॥ शिवाग्रेकथयिष्यामिलिंगांतादागतं
त्वया॥ ततोगांतांसमादायविधातासययौसुनः॥३२॥ ददर्शमध्यमार्गेसौकेतकंकुसुमान्वितम्॥ उवाचवच
नंसाधुब्रह्मानकेतकंप्रति॥३३॥ पुष्पोत्तमास्तुकल्याणंसहाय्यंक्रियतांमम॥ शिवाग्रेकथ्यतांधातालिंगस्यां
तंगतस्त्वं॥३४॥ इतिश्रुत्वाब्रह्मवाक्यंकेतकोपिसमाययौ॥ ततोब्रह्माशिवपुरोगत्वाहास्यंचकारह॥३५॥ ॥ब्र
ह्मोवाच॥ ॥सहस्रवर्षैर्लिंगांतोमयादृष्टस्तवाखिलः॥ नशक्तोवीक्षितुंचान्यःस्वकृतत्वान्निरीक्षितः॥
॥३६॥ इतिश्रुत्वावचस्तस्यक्रोधप्रस्फुरिताधरः॥ अंतःक्रोधंसमासाद्यशिवोवचनमब्रवीत्॥३७॥ ॥शि
वउवाच॥ ॥विनातुसाक्षिणंब्रह्मन्नन्यायोवदतोभवेत्॥ आनीयतांविश्वदर्शीसाक्षीविश्वासका-
रकः॥३८॥ ॥ब्रह्मोवाच॥ ॥एषाधेनुःकेतकोयंउभौतत्रैवसंस्थितौ॥ प्रष्टव्यौतौमहादेवत्वयाशप
थपूर्वकम्॥३९॥ ॥शिवउवाच॥ ॥कृतघ्नानांतुयत्पापंयुवयोर्मूर्ध्नितत्पतेत्॥ यद्यसत्यंप्रभाषेतंलिंगां
तोवीक्षितोमुना॥४०॥ ॥धेनुरुवाच॥ ॥लिंगांततेगतोब्रह्मायदूर्ध्वंनास्तिकिंचन॥ ततःपरावृत्ययथौम
यैतच्चविलोकितम्॥४१॥ ॥केतकउवाच॥ ॥त्वल्लिंगोर्ध्वंनिवसंतामयादृष्टःपितामहः॥ ततोप्यग्रेगतः
स्वेयंपरावृत्यसमागतः॥४२॥ ततःपरावृत्यययौममैतच्चविलोकितम्॥ ॥शिवउ०॥ ॥मिथ्याब्रूतेयोऽधमौमां

विष्ठापततिवन्मुखे॥५३॥अपवित्रंमुखंतस्मात्तद्भविष्यत्यसंशयम्॥गवामंगेषुतिष्ठंतिसर्वेदेवाःसवासवाः॥५४॥
पुच्छेषुसर्वतीर्थानिसर्वेधर्माश्चमस्तके॥मुखेषुसर्वशापानिब्रह्महत्यासमानिच॥५५॥शृणुकेतकतेपुष्पैर्नरोमा
मर्चयिष्यति॥लक्ष्मीसंततिहीनोसौरौरवंनरकंव्रजेत्॥५६॥शृणुब्रह्मन्नरोयस्तुजनस्त्वांपूजयिष्यति॥स
द्योभवत्यसौकुष्ठीदरिद्रोमृतसंततिः॥५७॥शृणुविष्णोमहाभागकार्त्तिकेस्मिन्जिनंत्वया॥तस्मात्त्वद्भी
तयेलोकैः कृतंभवतिचाक्षयम्॥५८॥ब्रह्मांशकसमुद्भूतेपालाशेयस्तुभोजनम्॥कुर्यात्कार्त्तिकमासेसो-
विष्णुलोकंप्रयास्यति॥५९॥गोशापकारणंप्रोक्तमित्थंकिंकथ्यतामथ॥६०॥ ॥इतिसनत्कुमारसंहि-
तायांकार्त्तिकमाहात्म्येगोशापकथनंनामतृतीयोऽध्यायः॥३॥ ॥ऋषयऊचुः॥ ॥पलाशत्वंकथंजा-
तंब्रह्मणःशंकरस्यच॥वटत्वंचतथाविष्णोःपिप्पलत्वंब्रुवंतुतत्॥१॥ ॥वालखिल्याऊचुः॥ ॥ब्रह्म
णाचपुरासृष्टाःसर्वेदेवाःसवासवाः॥मिलित्वासर्वएवैतेब्रह्माणंवाक्यमब्रुवन्॥२॥ब्रह्मन्सर्वाधिकोरु-
द्रःसर्वदेवेषुपठ्यते॥कर्त्तुंतद्दर्शनंदेवगच्छामोभवतासह॥३॥इतींद्रादिवचःश्रुत्वासर्वदेवपुरोगमः॥ब्र
ह्माकैलासमगमन्नानादेवगणैर्वृतः॥४॥शिवद्वारंसमासाद्यदेवाःसर्वेपिसंस्थिताः॥नदृश्यतेद्वारपालः
शिवश्चाभ्यंतरेस्थितः॥५॥गंतव्यंवानगंतव्यमस्माभिःशिवसन्निधौ॥परावृत्याथवास्वस्यस्थानेगंत
व्यमेववा॥६॥एवंचिंतयमानैस्तैर्नारदोमुनिसत्तमः॥पुरोदृष्टोदेववृंदैस्तंप्रणम्योचुरुत्तमम्॥७॥ ॥दे
वाऊचुः॥ ॥मुनेवेदविदांश्रेष्ठब्रूहिप्रश्नंसुशोभनम्॥किंकरोतिमहादेवोगंतव्यंवानवांतरे॥८॥ ॥ना-
रदउवाच॥ ॥चंद्रनाशदशायांतुदेवाःसंप्रस्थितागृहात्॥तस्मात्कश्चिन्महाविघ्नोभवतांसंभविष्यति 

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

॥९॥ किंकरोतिशिवश्चेतिप्रश्नैरतिदशाविभोः॥ तस्मात्संभोगकार्येयंवर्ततेत्रिपुरांतकः॥१०॥ ॥इंद्रउवाच॥ ॥
सर्वेषामेवदुःखानांनाशकर्तादिवस्पतिः॥ मय्यागतेकथंनाशोदेवतानांभविष्यति॥ ११॥ विभीषणायदेवा-
नांवल्गनंकुरुतेमुनिः॥ इतींद्रस्यवचःश्रुत्वाव्याकुलोऽभून्मुनिस्तदा॥१२॥ कथंमद्वचनंसत्यंभविष्यत्य-
द्यवज्रिणि॥ अद्यमद्वचनंशीघ्रंयदिसत्यंभविष्यति॥१३॥ राधादामोदरमुद्देकरिष्येकार्त्तिकव्रतम्॥ ए
वंसंचिंत्यमनसातूष्णींभूतोमुनीश्वरः॥१४॥ इंद्रोविचार्यदेवैः किमिदानींविधीयताम्॥ ततइंद्रउवा
चेदंवन्हेमद्वचनंशृणु॥१५॥ गृहीत्वाविप्ररूपंत्वंशिवस्याभ्यंतरेव्रज॥ यदिप्रसंगोस्त्यस्माकंतदावार्तानि
गद्यताम्॥१६॥ यदिनास्तिप्रसंगश्चेद्याचकत्वेनयाहिच॥ अवध्यत्वादताड्यत्वाद्भिक्षुकत्वेनतंव्रज॥
१७॥ इतिदेवेंद्रवचनंश्रुत्वावन्हिस्तथाकरोत्॥ अभ्यंतरेददर्शेशंशिवयासहसंगतम्॥१८॥ शिवया-
पिचदृष्टःसलज्जिताभोगमत्यजत्॥ कोसिकोसीतिसंपृष्टोभिक्षुकोहंक्षुधातुरः॥१९॥ वृद्धोस्म्यंधोस्मि
दीनोस्मिभोजनंदीयतांमम॥ तेनादृष्टमितिज्ञात्वापार्वतीतमभोजयत्॥२०॥ सोपिभुक्त्वासमाचा
रंवक्तुंसंप्रस्थितोबहिः॥ तस्मिन्नेवक्षणेगुप्तोनारदःपार्वतींययौ॥२१॥ शिरोनिधायपार्वत्याःपाद
योऽस्रुरोदह॥ अहोबालककिंजातंतच्छीघ्रमभिधीयताम्॥२२॥ करोमिनिष्कृतिंतस्यसाध्यासा-
ध्यस्यवान्यथा॥ मातर्वक्तुंनशक्नोमित्युपहासस्यकारणम्॥२३॥ कृतंयथेंद्रादिदेवैस्तथाकोन्यःक
रिष्यति॥ इतिश्रुत्वावचस्तस्यपुनःपुनरपृच्छत॥२४॥ मुद्रयित्वाततोनेत्रेकराभ्यांसमुनीश्वरः॥ उवा
चवचनंनीचंस्मृत्वासौगद्गदाक्षरम्॥२५॥ इंद्रोयंयुवयोर्भोगंदेवताभ्योन्यवर्णयत्॥ युवयोश्चकृ-


CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

तानिंदातांश्रुत्वादुःखितोस्म्यहम्॥ २६॥ भोगविच्छित्तयेवन्हिःप्रेषितोद्विजरूपकः॥ अथवाकिंमनेनापिकथने-
नममांबिके॥ २७॥ जगन्मातासिदेविलंकातेस्यादुपहास्यता॥ इतितस्यवचः श्रुत्वापार्वतीक्रुद्धमानसा॥ २८॥
स्फुरदोष्ठरक्तनेत्रादृष्ट्वातांनारदोययौ॥ गत्वादेवानुवाचेदंसंभोगाद्विरतोहरः॥ २९॥ अगम्यतांदर्शनार्थंदू
रतोसौविलोकितः॥ वन्हेर्मुनेर्वचःश्रुत्वादेवेंद्रःसगणोययौ॥ ३०॥ प्रणिपत्यमहादेवंकृतांजलिपुटोभवत्॥
दृष्ट्वातथाविधंशक्रंपार्वतीवाक्यमब्रवीत्॥ ३१॥ अहल्याजारदुष्टात्मन्सहस्रभगवासव॥ उपहासःकृतोमे
द्यफलंतस्यसमाप्नुहि॥ ३२॥ यावंत्यःसंतिदेवानांज्ञातयःसर्वएवते॥ अजानंतःस्त्रीसुखानिशाखिनःसं
तुसस्त्रियः॥ ३३॥ इतिदेवीवचः श्रुत्वाकंपिताःसर्वदेवताः॥ ब्रह्मविष्णुमहेशाद्यास्तुष्टुवुर्जगदंबिकाम्॥ ३४॥
ततोदेवीप्रसन्नाभूद्देवेंद्रंवाक्यमब्रवीत्॥ देवामद्वचनंमिथ्यात्रिलोकेपिनजायते॥ ३५॥ तस्माद्वृक्षांशतो-
वृक्षायूयंसर्वेभवंतुवै॥ इतिदेव्यावचःश्रुत्वाजातादेवास्तुपादपाः॥ ३६॥ अश्वत्थरूपीभगवान्वटरूपीसदा
शिवः॥ पलाशोभूद्विधाताचआम्रःशक्रोवभूवह॥ ३७॥ इंद्राणीसालताज्ञेयादेवानांयोषितस्तथा॥ माल्
त्याद्याःपुष्पलताउर्वश्याद्याप्सरोभवन्॥ ३८॥ तस्मात्सर्वप्रयत्नेनकार्त्तिकेश्वत्थमर्चयेत्॥ यानारीकार्त्ति
केमासिलक्षंकुर्यात्सदक्षिणाः॥ ३९॥ राधादामोदरंपूज्यमंदवारेचतत्तले॥ दंपतीभोजयेद्राधादामोदररूप
रूपिणौ॥ ४०॥ भोजयित्वासपत्नीकान्पश्चाद्भुंजीतवाग्यतः॥ वंध्यापिलभतेपुत्रंइतरासांतुकाकथा॥ ४१
॥ मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे॥ अग्रतःशिवरूपायअश्वत्थायनमोनमः॥ ४२॥ विष्णोश्चप्र-
तिमाभावेकीर्त्तनंजागरादिकम्॥ अश्वत्थमूलेकर्त्तव्यंविष्णोराराधनंपरम्॥ ४३॥ सदासंन्निहितोवि- ६

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

ष्णुर्द्दीपस्तु ब्राह्मणे यथा॥ पादपेषु च बोधिद्रो शालग्रामे शिलासु च॥ ५४॥ कार्त्तिके मासि संप्राप्ते येन तद्व्रतमाचरेत्॥ यथाकरस्थितं रत्नं तथा त्यजति बालिशः॥ ५५॥ कार्तिकान्नापरो मासो विष्णुप्रीतिकरो भुवि॥ स्वल्पक्लेशेनैव यस्मिन्मासे विष्णुः प्रसीदति॥ ५६॥ दुर्लभं मानुषं जन्म आर्यावर्त्ते ततोपि च॥ ततोपि दुर्लभं ज्ञानं ज्ञात्वा ये तु न कुर्वते॥ ५७॥ व्रतं कार्त्तिकमासस्य ते नरा मंदबुद्धयः॥ ब्रह्महत्यादिपापानां नाशनः कार्त्तिको मतः॥ ५८॥ तमुत्सृज्य नरः कोसौ योन्यं धर्मं समाचरेत्॥ अश्वत्थपूजास्पर्शेन कर्त्तव्या शनिवासरे॥ ५९॥ अन्यवारेश्वत्थसंगाद्दरिद्रो जायते नरः॥ ५०॥ ॥ इति श्रीसनत्कुमारसंहितायां कार्त्तिकमहात्म्ये श्वत्थकथनं नाम चतुर्थोऽध्यायः॥ ४॥ ॥ अनूरुरुवाच॥ ॥ मंदं विना कथं जातो नस्पृश्यः पिप्पलो भुवि॥ एतदाख्याहि भगवन्नुत्कंठा श्रवणे मम॥ १॥ ॥ सूर्य उवाच॥ ॥ देवैर्दैत्यैर्द्वापरांते समुद्रमथनं कृतम्॥ पुरोपायो विष्णुना नैर्बलिराजादिसंस्तुतेः॥ २॥ मंथानं मंदरं कृत्वा रज्जुं कृत्वा तु वासुकिम्॥ ममंथुः पंचवर्षाणि ततः फेनोभ्यजायत॥ ३॥ ततो वर्षत्रयेणैव समुत्पन्ना सुराभवत्॥ ततो जाता कामधेनुर्वर्षेणैकेन भो खग॥ ४॥ वर्षार्द्धैरावतो हस्ती वर्षात्सप्तसुरोहयः॥ त्रिभिर्मासैरप्सरसस्ततो वर्षेण चंद्रमाः॥ ५॥ ततो वर्षत्रयाज्ज्वालं ज्वालामालातिभीषणम्॥ कालकूटं विषं घोरं तद्दाहजगत्त्रयम्॥ ६॥ तज्ज्वालाक्रांतदेहस्तु विष्णुर्नीलो बभूव ह॥ हाहाकारो महाञ्जातो त्रैलोक्ये सचराचरे॥ ७॥ वयं तु चकिता जातास्तस्मिन्काले खगोत्तम॥ स्वकरैर्बद्धतोयानि निक्षिप्तानि धरातले ॥ ८ ॥ ततः संप्रार्थितः शर्वो मया धात्रा च विष्णुना॥ कृपालुना तेन पीतं विषं हालाहलाभिधम्॥ ९॥ तद्दाहविनिवृत्त्यर्थं धृता गंगा स्वमस्तके॥ कृता ललाटे चंद्रस्य कला

कर्पूरलेपनम् ॥१०॥ ततः कोदंडमभवद्दर्षोत्कं स्वश्वमासतः ॥ पारिजातस्ततोवर्षोद्भन्मासाच्चकौस्तुभः ॥११
॥ ततोज्येष्ठासमुत्पन्नाकाषायांबरधारिणी ॥ पिंगकेशारक्तनेत्राकूष्मांडसदृशस्तनी ॥१२॥ अतिवृद्धादंत
हीनाललज्जिह्वाघटोदरी ॥ यांदृष्ट्वैवचलोकोयंसमुद्विग्नःप्रजायते ॥१३॥ ततोप्यभूच्चंचलापांगीसौंदर्यस्यै
वशेवधिः ॥ कृशोदरीस्वर्णवर्णापीनोन्नतपयोधरा ॥१४॥ दधत्क्षीरोदकंवासः कराभ्यांकमलस्रजम् ॥ य-
स्यादर्शनमात्रेणमोहितादेवदानवाः ॥१५॥ ततःपुनर्मथ्यमानाद्वादशाब्दैस्तुसागरात् ॥ गृहीत्वापीयूषक-
लशंस्वयंधन्वंतरिर्ययौ ॥१६॥ आदौपीलामृतंदेवारत्नानिव्यभजंस्ततः ॥ स्मरादत्तादानवेभ्योधेनुःसं-
स्थापितासुरैः ॥१७॥ ऐरावतःसुरेंद्रेणभानुनाश्वोहयेश्वरः ॥ देवैरात्ताश्चाप्सरसःकोदंडंशूलपाणिना
॥१८॥ पांचजन्योविष्णुनैवपारिजातस्तुविष्णुना ॥ गृहीत्वाकौस्तुभंविष्णुरपश्यच्चेंदिरासुखम् ॥१९
लक्ष्मीरपिहरेरास्यंदृष्ट्वाचाधोमुखीस्थिता ॥ सर्वेपश्यंतितांलक्ष्मींनकेनापिविभज्यते ॥२०॥ पश्यंत्यन्योन्य
मास्यानिस्तुवंतिचरमांपुनः ॥ ततःपितामहःप्राहशिवमर्द्धांगधारकम् ॥२१॥ लक्ष्मीरियंकस्यदेयेत्यादि
श्यपरमेश्वर ॥ सर्वान्दृष्ट्वाततोदेवान्रुद्रोवचनमब्रवीत् ॥२२॥ ॥रुद्रउवाच॥ ॥एषनारायणःसाक्षाल्ल
क्ष्मीयोग्योमतोमम ॥ तथापिप्रौढयालक्ष्म्याक्रियतांवास्वयंवरः ॥२३॥ ॥श्रीरुवाच॥ ॥देवदेवम
हादेवभक्तानुग्रहकारक ॥ निसृतंयत्तवमुखात्तन्मिथ्यानैवजायते ॥२४॥ ॥शिवउवाच॥ ॥आकार्य
तांसागरोस्याःपितापाणिग्रहायच ॥ तूर्णंकरोतुसामग्रींद्वादश्यामद्यकार्त्तिके ॥२५॥ ॥श्रीसूतउ-
वाच॥ ॥ततआकारितोधात्राकृतवैवाहकौतुकः ॥ नारदोदत्तवान्लग्नंततोलक्ष्मीर्व्यजिज्ञपत् ॥ ७


CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

२६॥ ॥श्रीरुवाच॥ ॥आदौज्येष्ठांसमुद्वाह्यकनिष्ठामुद्वहेत्ततः॥ एषपंथास्तुवेदोक्तस्तस्माद्देषाविवाह्य
ताम्॥२७॥इतिलक्ष्मीवचःश्रुत्वासर्वेत्युद्विग्नमानसाः॥अतःपरंकिंविधेयंकएतांवरयिष्यति॥२८॥इ
त्युद्विग्नान्सुरान्दृष्ट्वानारदोवाक्यमब्रवीत्॥विष्णोतवातीवभक्तोमुनिरुद्दालकोमहान्॥२९॥ततो
विवाहार्थमेनांवरयिष्यत्यसंशयम्॥ ॥विष्णुरुवाच॥ ॥आकार्यतांमुनिवरउद्दालकइदंवचः॥
३०॥श्रुत्वैवानीतएवैषोनारदेनमहात्मना॥तंनम्रकंधरंदृष्ट्वाविष्णुर्वचनमब्रवीत्॥३१॥ ॥विष्णुरुवाच॥
उद्दालकमुनिश्रेष्ठगृहस्थस्याश्रमंविना॥वृथातपस्याभवतितस्मात्पाणिग्रहंकुरु॥३२॥समुद्रस्यतु
कन्येयंज्येष्ठानाम्नीपतिव्रता॥एनांवरयत्वंविप्रकनिष्ठांवरयाम्यहम्॥३३॥इतिविष्णुवचःश्रुत्वात्तू-
ष्णीमासीन्मुनीश्वरः॥दत्त्वासमुद्रस्यहस्तेजलंतांनारदोर्पयत्॥३४॥तदुत्तरक्षणेतस्मिंन्श्रियःपा
णिग्रहःकृतः॥लक्ष्मींकरेहरिर्धृत्वामुनींद्रंवाक्यमब्रवीत्॥३५॥नयेमामाश्रमंमृषेनवतुष्टोस्मिस-
र्वदा॥अहंगच्छामिवैकुंठंगच्छत्वंमुनिमंदिरम्॥३६॥इत्युक्त्वानिर्गतोविष्णुर्वैकुंठंरमयासह॥उ-
द्दालकोपितांगृह्यप्रययौस्वीयमाश्रमम्॥३७॥होमधूम्रसमायुक्तंवेदध्वनिनिनादितम्॥स्वकर्म
निष्ठविप्रैर्दृष्ट्वासमुद्दालकाश्रमम्॥३८॥विलोक्यदुःखिताज्येष्ठापतिंवचनमब्रवीत्॥ ॥ज्येष्ठोवा
च॥ ॥शिरःपीडाकरश्चायमाश्रमोममवर्त्तते॥नवसाम्यत्रभोस्वामिन्नयमामन्यमाश्रमम्॥३९
॥एवंसहस्रशस्तेनदर्शिताआश्रमाःस्वगः॥एकोपितस्यामनसिसमायातिनचाश्रमः॥४०॥तदा
मुनिःपर्यपृच्छत्कीदृशंरोचतेस्थलम्॥ ॥ज्येष्ठोवाच॥ ॥रात्रौरात्रौगृहेयत्रदंपत्योःकलहोभवे-

त॥४१॥ सकौलंधर्ममुत्सृज्ययत्रतिष्ठंतिवैजनाः॥ द्यूतकारामद्यपाश्चयत्रवेश्योपगामिनः॥४२॥गुरूमा
तृद्विजातीनांद्वेष्टारोयत्रसंतिच॥ नित्यंपरान्नंभुंजंतिअवाद्यंवादयंतिच॥४३॥येपृष्ठमैथुनंकुर्युर्वेदनिं
दांप्रकुर्वते॥ मैत्र्यंतरायायेलोकायत्रयत्रचसंतिच॥४४॥ तत्रतत्ररतिर्मेस्तिनान्यस्थानेषुवर्त्तते॥
इतिश्रुत्वावचस्तस्याम्रुनींद्रोभृशदुःखितः॥ परंचिंतार्णवेमग्नोमनस्येवंव्यचिंतयत्॥४५॥ योवा
सोममयोग्यस्तुसोस्यावासोनरोचते॥ अतःपरंकिंविधेयंविष्णुनाग्राहितात्वियम्॥४६॥स्वका
र्यसाधकादेवाभवंतिनपरस्यतु॥सुखंदुःखंनजानंतिकिंकार्यंनुमयाधुना॥४७॥ अथवाजातएवा
स्यविवाहस्तुहरेःखलु॥ एनांत्यज्यगमिष्यामिनान्यथामेतपोभवेत्॥४८॥विचार्यैवंस्वमनसितां
भार्यांवाक्यमब्रवीत्॥ ॥उद्दालकउवाच॥ ॥शृणुमद्वचनंकांतेअश्वत्थाधःस्थिराभव॥४९॥
शरत्कालस्यधर्मेणशिरःपीडाभविष्यति॥ तस्मादहंगमिष्यामितवयोग्यंयथास्थलम्॥५०॥ वि-
लोक्यतादृशंतत्रत्वांनयामिचमाशुचः॥ इत्युक्त्वाश्वास्यतांज्येष्ठांपलायनमचीकरत्॥५१॥सा
पिस्थित्वातस्यमार्गमास्तूर्यंप्रदद्दर्शह॥सायंकालेततोजातेनिराशाभूत्तदागमे॥५२॥रुरोदक
रुणंदीनंत्रैलोक्यबधिरंकृतम्॥ वैकुंठेपिश्रुतंलक्ष्म्याविष्णुंसापिव्यजिज्ञपत्॥ ॥श्रीरुवाच॥ ॥
रोदनंश्रूयतेचाद्यमद्भगिन्याकृतंविभो॥ गतस्तांत्यज्यसमुनिःसांत्वनायसमाव्रज॥५४॥ श्रुत्वेत
द्वचनंलक्ष्म्याःखगारूढोजनार्दनः॥श्रियासहययौतत्रयत्ररोदितिसाचिरम्॥५५॥ ॥विष्णुरु
वाच॥ ॥ज्यानेज्येष्ठेविहायैवत्वांगतोसौमुनीश्वरः॥मदंशसंभवश्चायमश्वत्थोस्तिगयापुरे॥ ८

५६॥ बोधनामालसमंत्रवैचिरकालंस्थिराभव॥ तवैवानुचराःसर्वेवसंतिचपिशाचकाः॥५७॥ तैःसार्कं-
स्थीयतामत्रशोकंसत्कासुखीभव॥अर्घार्कपुत्रयोगोस्तिसप्तमेसप्तमेहनि॥५८॥भगिनीतेऽवश्यमे-
वमीलनायागमिष्यति॥ यैःस्पृश्यतेन्यवारेषुपिप्पलस्त्वद्गृहंव्रज॥ ५९॥ मंदवारेतुयैःस्पृष्टस्तत्रयास्यति
मन्प्रिया॥ इत्याभाष्यवास्यवैकुंठंजगामसहहरिःस्वयम्॥ ६०॥ तस्मान्मंदंविनानूनंनस्पृश्योश्वत्थपादपः
॥इत्थमश्वत्थपूजानुकृयोत्कार्त्तिकमासके॥ ६१॥ नकार्त्तिकसमोमासःसत्यंसत्यंब्रवीमिते॥ ज्येष्ठस्या-
नंमयाप्रोक्तंशृण्वतांपापनाशनम्॥ ६२॥अतःपरंब्रूहिवत्सकिमन्यच्छ्रोतुमिच्छसि॥ ६३॥ ॥इतिसनत्कु-
मारसंहितायांकार्त्तिकमहात्म्येपंचमोऽध्यायः॥५॥ ॥ऋषयऊचुः॥ ॥कदास्नानंप्रकर्त्तव्यंकथंस्थेयं
दिनावधि॥एतदाख्यातुमर्हंतिवालखिल्यास्तपोधनाः॥१॥ ॥वालखिल्याऊचुः॥ ॥रात्र्यांतुयोश-
शेषायामुत्तिष्ठेच्छयनात्सुधीः॥विष्णुंस्तुत्वाबहुस्तोत्रैर्दिनकार्यंविचारयेत्॥ २॥प्रातःस्मरामिभवभी-
तिमहार्त्तिशांत्यैनारायणंगरुडवाहनमंजनाभम्॥ग्राहाभिभूतवरवारणमुक्तिहेतुंचक्रायुधंतरुणवा-
रिजपत्रनेत्रम्॥ ३॥प्रातर्भजामिभजतामभयंकरंतंप्राक्देहजन्मकृतपापभयापहत्यै॥ योग्राहवक्त्र-
पतितांघ्रिगजेंद्रघोरशोकप्रनाशनकरोधृतशंखचक्रः॥४॥प्रातर्भजामिमनसावचसाचमूर्ध्नापादार-
विंदयुगलंपरमस्यपुंसः॥नारायणस्यनरकार्णवतारणस्यपारायणप्रवणविप्रपरायणस्य॥५॥श्लोक-
त्रयमिदंपुण्यंप्रातःप्रातःपठेन्नरः॥ लोकत्रयगुरुस्तस्मैदद्यादात्मपदंहरिः॥ ६॥ब्रह्मामुरारिस्त्रिपुरांतका-
रीभानुःशशीभूमिसुतोबुधश्च॥ गुरुश्चशुक्रःशनिराहुकेतुःकुर्वंतुसर्वेममसुप्रभातम्॥७॥ पृथिवीसगंधा

सरसास्तथापःस्पर्शीचवायुर्ज्वलितंचतेजः॥नभःसशब्दंमहतासहैवकुर्वं॥८॥भृगुर्वसिष्ठःक्रतुरंगिराश्च-
मनुःपुलस्त्यःपुलहश्चगौतमः॥रैभ्योमरीचिश्च्यवनःश्चदक्षःकुर्वंतुसर्वे॥९॥सनत्कुमारःसनकःसनं
दनःसनातनोप्यासुरिपिंगलौच॥सप्तस्वराःसप्तरसातलानिकुर्वं॥१०॥सप्तार्णवाःसप्तकुलाचलाश्च
सप्तर्षयोद्वीपवनानिसप्त॥भूरादिकृत्वाभुवनानिसप्तकुर्वं॥११॥इत्थंप्रभातेपरमंपवित्रंपठेत्स्मरेद्वाःशृ
णुयाच्चतद्वत्॥दुःस्वप्ननाशस्त्विहसुप्रभातंभवेच्चनित्यंभगवत्प्रसादात्॥१२॥इत्यादिस्तुतिभिर्विष्णुं
स्तुत्वाहस्तावलोकनम्॥कुर्यादादर्पणंस्वर्णंदूर्वांगांमंगलंचयत्॥१३॥दृष्ट्वाग्रामाद्बहिर्यायाद्विशिरज
नवर्जिते॥ग्रामनैर्ऋत्यादिग्भागेरथ्यास्थानादिवर्जिते॥१४॥समप्रदेशेतुतृणान्यास्तीर्यमलमुत्सृजे-
त्॥दिशोनेक्षेतचमुखंपिधायांबरखंडतः॥१५॥नश्वसेतनचष्ठीवन्नभाषेन्नचसंछिरेत्॥गंधलेप
क्षयकरंततःशौचंसमाचरेत्॥१६॥एकांलिंगेगुदेसप्तदशावामेकरेतथा॥उभयोःसप्तदातव्याःपा
दयोर्मृत्तिकात्रयम्॥१७॥एतदुक्तंगृहस्थानांद्विगुणंब्रह्मचारिणाम्॥त्रिगुणंतुवनस्थानांयतीनांचच
तुर्गुणम्॥१८॥एवंशौचंविधायाथोदंतधावनमाचरेत्॥दुग्धकंटकवृक्षांश्चहित्वाऽन्याद्दंतधावनम्
॥१९॥सद्यासन्नंमृदुतरंदंतधावनमाचरेत्॥उपवासेनवम्यांचषष्ठ्यांश्राद्धतिथौरवौ॥२०॥अमायांदं-
तकाष्ठस्यसंयोगाच्छतकुलक्षयः॥कुर्याद्द्वादशगंडूषानन्तुकेदंतधावने॥२१॥गृहीत्वार्चनसामग्रींत-
तोहरिगृहंव्रजेत्॥तदभावेशिवगृहेदेव्यावाभास्करस्यच॥२२॥अथवातुगणेशस्यस्थानेपिप्पल
सन्निधौ॥गोष्ठेवाथनदीतीरेगत्वापूजांसमाचरेत्॥२३॥ततोगायेत्नृत्येत्पूजांकृत्वातुबुद्धिमा

न॥ अशक्तोगायनाद्येषु गायकानेवपूजयेत्॥ २४॥ तांडवेनापिनृत्यंति कार्त्तिके विष्णुसन्निधौ॥ यद्वातद्वापि
गायंतियांतितेवैष्णव पदम्॥ २५॥ दीपान्दद्याद्बहुविधान् कार्त्तिके विष्णुसन्निधौ॥ कार्त्तिकेमासिसंप्राप्तेगग
नस्वच्छतारके॥ २६॥ रात्रौलक्ष्मीः समायातिद्रष्टुंभुवनकौतुकम्॥ यत्रयत्रचदीपान्सापश्यत्यब्धिसमुद्भवा
॥ २७॥ तत्रतत्ररतिंकुर्यान्नांधकारेकदाचन॥ तस्माद्दीपस्थापनीयः कार्त्तिकेमासिवैसदा॥ २८॥ लक्ष्मीरू
पार्थिनांप्रोक्तंदीपदानंविशेषतः॥ देवालयेनदीतीरेराजमार्गेविशेषतः॥ २९॥ निद्रास्थलेदीपदातातस्य
श्रीः सर्वतोमुखी॥ दुर्बलस्यालयंवीक्ष्यदीपशून्यंतुयोददेत्॥ ३०॥ विप्रस्यवान्यवर्णस्यविष्णुलोकेमही
यते॥ कीटकंटकसंकीर्णेदुर्गमेविषमस्थले॥ ३१॥ कुर्याद्योदीपदानानिनरकंसनगच्छति॥ एवंसंकीर्त्तनं
कृत्वानाडीद्वयनिशामुखे॥ ३२॥ आगत्यतोयनिकटेदेशकालादिचोच्चरेत्॥ स्मरेद्गंगादिकानद्योविष्णु
शर्वादिदेवताः॥ ३३॥ नाभिमात्रेजलेस्थित्वामंत्रमेतमुदीरयेत्॥ कार्त्तिकेहंकरिष्यामिप्रातःस्नानंजनार्द
न॥ ३४॥ प्रीत्यर्थंतवदेवेशदामोदरमयासह॥ नित्येनैमित्तिकेकृष्णकार्त्तिकेपापनाशन॥ गृहाणार्घ्यं
मयादत्तंराधयासहितोहरे॥ ३५॥ किरणाधूतपापाचपुण्यतोयासरस्वती॥ गंगाचयमुनाचैवपंचन-
द्यःपुनंतुमाम्॥ ३६॥ एतान्मंत्रान्समुच्चार्यमलस्नानंसमाचरेत्॥ ततस्तुपावमानीभिरभिषिंचेत्स्वम-
स्तकम्॥ ३७॥ अघमर्षणकंकृत्वावासःपरिदधेत्ततः॥ जान्हवीस्मरणंकुर्यात्सर्वतीर्थेषुमानवः॥ ३८॥
नान्यत्तीर्थेतुजान्हव्यांस्मरणीयंकदाचन॥ स्नानांगतर्पणंकृत्वाचांचलंपीडयेद्बहिः॥ ३९॥ यन्मयादू-
षितंतोयंशारीरमलसंचयैः॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहम्॥ ४०॥ वस्त्राणि पीडनंकृत्वा

कुर्याच्चतिलकंततः॥ ततः संध्यामुपासीत स्वसूत्रोक्तेनवर्त्मना॥ ४१॥ ततः कार्योजपोदेव्या यावदर्कोदयोभ-
वेत्॥ एतत्प्रोक्तंरात्रिशेषकृत्यंदैवमथोच्यते॥ ४२॥ ॥इतिसनत्कुमारसंहितायांकार्त्तिकमहात्म्ये षष्ठोध्या
यः॥ ॥वालखिल्याऊचुः॥ ॥कार्त्तिकेदिनकृत्यं यत्तच्छृण्वंतुमुनीश्वराः॥ यस्मिन्कृते कार्त्तिकोयंसकलः
सफलोभवेत्॥ १॥ विष्णोः सहस्रनामाद्यंसंध्यांतेचपठेत्ततः॥ देवालयेसमागत्यपुनः पूजनमारभेत्॥ २॥
नृत्यगानादिकार्येषुप्रहरंदिवसंनयेत्॥ ततः पुराणश्रवणं यामार्धंसम्यगाचरेत्॥ ३॥ पौराणिकस्यपूजा
चतुलसीपूजनंतथा॥ कृत्वामाध्यान्हिकंकर्मभुंजीतद्विदलोज्झितम्॥ ४॥ बलिदानंवैश्वदेवमतिथीनांस
मर्पणम्॥ कृत्वाभुंक्तेतुयोमर्त्यः केवलंचामृतंहितत्॥ ५॥ यथाशक्तिद्विजाभोज्याः प्रत्यहंवाथपर्वणि॥-
हविष्यभोजनंकुर्याद्धविष्यमथचोच्यते॥ ६॥ हैमंतिकंसितास्विन्नंधान्यंमुद्गायवास्तिलाः॥ कलाय-
कंगुनीवारावास्तूकंहिलमोचिका॥ ७॥ षष्टिकाः कालशाकंचमूलकंकेमुकेतरत्॥ कंदः सैंधवसामुद्रे-
गव्येचदधिसर्पिषी॥ ८॥ पयोनुधृतसारंचपनसाम्रहरीतकी॥ पिप्पलीजीरकंचैवनारिंगंचैवतिंतिणी
॥ ९॥ कदलीलवलीधात्रीफलान्यगुडमैक्षवम्॥ अतैलपक्वंमुनयोहविष्याणिप्रचक्षते॥ १०॥ सर्वथै
वनभोक्तव्यमामिषान्नंतुकार्त्तिके॥ तत्सर्वदावर्जनीयंकार्त्तिकेतुविशेषतः॥ ११॥ दग्धमन्नंद्विपक्वंच
मसूरान्नंसवल्कलम्॥ उद्दालकाः पर्युषितमन्नमामिषमुच्यते॥ १२॥ वृंताकानिपटोलानितुंबिका
चकलिंगकम्॥ बिंबीफलानित्रपुसंफलंशाकेषुचामिषम्॥ १३॥ दोरकातुलसीचिल्लिछत्राकपो
त्तपत्रकम्॥ चक्रवर्तीराजगिरिः पत्रशाकेषुचामिषम्॥ १४॥ गृंजनंरक्तमूलंचपलांडुंलशुनंतथा १०

॥सर्वदेवामिषाणिस्युः कार्त्तिकेस्मरणंत्यजेत्॥१५॥परमांसैःस्वमांसानियःपुष्णातिनराधमः॥परजन्म
नितस्यैवविष्ठायांजायतेक्रमिः॥१६॥बालान्मृगान्पक्षिणोवातथाबालफलानिच॥घातयंतिदुरात्मा-
नोजायंतेमृतबालकाः॥१७॥सर्वाण्येकत्रदानानिसर्वतीर्थान्यथैकतः॥सर्वव्रतान्येकतश्चअहिंसाक
लयासमम्॥१८॥एवंविचार्यभुंजीयादन्नंविष्णुनिवेदितम्॥वैश्वदेवस्यांतरेतुयआगच्छतिभिक्षु
कः॥१९॥चांडालोवाथचोरोवाविष्णुरूपीनसंशयः॥सायंकालउषःकालेवैश्वदेवस्यचांतरे॥
॥२०॥अतिथिर्विमुखोयातिसतुदुःखस्यभाजनः॥एवभुंक्त्वाऽचमेत्सम्यग्यथोच्छिष्टंनतिष्ठति॥२१
दंतोच्छिष्टंशलाकाभिर्निर्हरेन्नैवपीडयेत्॥दृढंयद्दंतसंलग्नमुच्छिष्टंतत्तुदंतवत्॥२२॥तंनिष्कासनतश्चे
त्स्यात्कदाचिद्रुधिरागमः॥चांद्रायणत्रयंकुर्यात्तस्यसंशुद्धिहेतवे॥२३॥भक्षयेत्तुलसीवक्त्रशुध्य-
र्थंतीर्थवारिणा॥तुलस्याधारणंकार्यंकार्त्तिकेतुविशेषतः॥२४॥तुलस्यांसर्वतीर्थानितुलस्यांसर्व-
देवताः॥कार्त्तिकेमासितिष्ठंतिनात्रकार्याविचारणा॥२५॥यस्यैवमृत्युसमयेतुलसीमुखसंस्थिता
॥महापापोदुराचारःकीकटेवाथसंस्थितः॥२६॥नयात्यसौसंयमिनींविष्णुलोकेमहीयते॥तुलसी
मंजरीभिर्यो विष्णावाथशिवस्यच॥२७॥सहस्रनामभिःकुर्यात्पूजांयोभक्तिनसरः॥किंदानैःकिं
व्रतैस्तस्यसर्वपापैःप्रमुच्यते॥२८॥तुलस्यमृतजन्मासि सदात्वंकेशवप्रिये॥केशवार्थंविचिन्वामि-
वरदाभवशोभने॥२९॥मंत्रेणानेनतुलसीस्तुयोद्यात्हरितुष्टये॥अंगणेतुसमालोक्यतुलसीनांकदंब
कम्॥३०॥तद्गृहन्नाविशंत्येवयमदूतानसंशयः॥यत्किंचिद्दीयतेदानंतुलस्याचसमन्वितं॥३१॥अ

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



पारंतुप्रयुक्तंतत्तन्नव्रजेन्नरकंनरः॥संसारव्यवहारेणदिनशेषंसमापयेत्॥३२॥सायंकालेपुनर्गछेद्वि-
ष्णोर्देवालयंप्रति॥संध्यांकृत्वाप्रयुंजीततत्रदीपान्यथाबलम्॥३३॥निशायाःप्रहरेचाद्येकुर्याज्जाग
रणंतथा॥ब्रह्मचर्यव्रतंकुर्याद्भार्यामायादृतौतथा॥३४॥तयाकामयमानोवाभार्यांगछन्नदोषभाक्॥
हरिसंतुष्टयेकार्यस्त्यागोवास्वेष्टवस्तुनः॥३५॥मासांतेद्विजवर्यायदद्यात्तद्व्रतपूर्त्तये॥सर्वव्रतानिचै
कत्रसत्यव्रतमथैकतः॥३६॥तस्मात्सर्वप्रयत्नेनसत्यंभाषेतसर्वदा॥अन्यधर्मेष्वधिकृतिःकुलजाति
विभागतः॥३७॥अधिकारीकार्त्तिकेतुसर्वएवजनोभवेत्॥कलौकलुषचित्तानामुपायोनैववर्तते॥३८
॥उद्धारार्थंकार्तिकस्यव्रतंकुर्यात्प्रयत्नतः॥तावद्गर्जंतिपापानिब्रह्महत्यादिकानिच॥३९॥नकृतंका-
र्तिकस्नानंयावज्जंतुभिरादरात्॥गोग्रासःकार्त्तिकेमासिविशेषाद्येस्तुदीयते॥४०॥तेषांपुण्यफलं-
वक्तुंनशक्नोतिपितामहः॥विष्णुदेवालयंप्रातःसंमार्जयतिकार्त्तिके॥४१॥तस्यवैकुंठभवनेजायते-
स्फुटंगृहम्॥दद्यात्कार्तिकमासेतुधर्मकाष्ठानिभूरिशः॥४२॥नतत्पुण्यस्यनाशोस्तिकल्पकोटिश
तैरपि॥सुधादिलापयेद्यस्तुकार्त्तिकेविष्णुमंदिरे॥४३॥चित्रादिकंलिखेद्वापिमोदतेविष्णुसन्निधौ
॥रात्रिशेषेभवेत्स्नानमुत्तमंविष्णुतुष्टिकृत्॥४४॥सूर्योदयेमध्यमंस्याद्यावन्नास्तातुकृत्तिका॥ताव-
देवभवेत्स्नानमन्यथातंनकार्त्तिकम्॥४५॥देवालयेवातीर्थेवाकृतोदुष्टैर्नृपैःकरः॥तंमोचयंतियेलो
कास्तेषांधर्मःसनातनः॥४६॥स्नानंस्त्रीभिर्विधातव्यंगृहीत्वाज्ञांधवस्यच॥अपृष्ट्वायत्कृतंधर्म्यंभ
र्तारंतस्त्वयंनयेत्॥४७॥स्त्रीणांनास्त्यपरोधर्मोभर्त्तारंप्रोज्झ्यकाश्यप॥कुर्यात्सहस्त्रपापानिभर्त्राज्ञां ११


CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

यासमाचरेत्॥४८॥सैषाधर्मवतीलोकेनजायेतव्रतादिना॥दरिद्रःपिततो मूर्खोदीनोपियदिचेत्पतिः॥४९॥ता
दृशाःशरणंस्त्रीणांतस्मात्ताम्निरयंव्रजेत्॥५०॥ ॥इतिसनत्कुमारसंहितायांकार्त्तिकमहात्म्येनियमक
थनंनामसप्तमोऽध्यायः॥ ॥अरुणउवाच॥ ॥कस्मिंस्तीर्थेविशेषेणफलंकार्तिकसंभवम्॥क्षेत्रे
वाएतदाख्याहिभगवन्भूतभावन॥१॥ ॥सूर्यउवाच॥ ॥यत्रकुत्रापिकर्त्तव्यंजलेस्नानंतुकार्त्तिके॥
उष्णोदकेनकर्त्तव्यंस्नानंकुत्रापिकार्त्तिके॥२॥ततोदशगुणंपुण्यंशीततोयनिमज्जनात्॥ततःशतगु-
णंपुण्यंबहिःकूपोदकेकृतम्॥३॥कूपात्सहस्रगुणितंफलंवापिनिषेवतः॥ततोयुतगुणंपुण्यंतडागस्ना
नतोभवेत्॥४॥ततोदशगुणंपुण्यंनिर्झरेषुनिमज्जनात्॥ततोधिकतरंपुण्यंनदीस्नानस्यकार्तिके॥
५॥नद्यादशगुणंप्रोक्तंतीर्थस्नानेखगोत्तम॥ततोदशगुणंपुण्यंनद्योर्यत्रचसंगमः॥६॥नदीत्रय
स्यसंयोगेपुण्यस्यांतोनविद्यते॥सिंधुःकृष्णाचवेणीचयमुनाचसरस्वती॥७॥गोदावरीविपाशा
चनर्मदातमसामही॥कावेरीशरयूःक्षिप्रातथाचर्मण्वतीनदी॥८॥वितस्तावेदिकाशोणोवेत्रवत्यप
राजिता॥गंडकीगोमतीपूर्णाब्रह्मपुत्रसरोवरम्॥९॥वाग्मतीचशतद्रुश्चतथाबदरिकाश्रमः॥दुर्लभाः
कार्त्तिकेत्वेतेतीर्थान्यथनिबोधमे॥१०॥सर्वेभ्यश्चस्थलेभ्यश्चआर्यावर्त्तंपुण्यदम्॥कोल्हापुरीततः
श्रेष्ठाततःकांचीद्वयंस्मृतम्॥११॥अनंतसेनवसातिर्वराहःक्षेत्रमेवच॥चक्रक्षेत्रंततःपुण्यंमुक्तिक्षे
त्रंततोधिकम्॥१२॥अवंतिकाततःश्रेष्ठाततोबदरिकाश्रमः॥अयोध्याचततःश्रेष्ठागंगाद्वारंत
तोधिकम्॥१३॥ततःकनखलंतीर्थंततोमधुपुरीवरा॥एकोपिकार्तिकोमासोमथुरायमुनाजले॥

॥१४॥यैःस्नातस्तैस्तुवैकुंठेबहुकालंवसंतिहि॥राधादामोदरस्तत्रस्वयंस्नातस्तुकार्त्तिके॥१५॥अतोमधुपु
रीश्रेष्ठायमुनाचविशेषतः॥द्वारावतीततःश्रेष्ठाप्रत्यहंस्नातिकेशवः॥१६॥षोडशस्त्रीसहस्रेणसार्धंया
दवसंयुतः॥द्वारकायांमृत्तिकायास्तिलकोयेनमस्तके॥१७॥धार्यतेसौनरोज्ञेयोजीवन्मुक्तोनसंशयः
॥द्वारकास्नानमाहात्म्यंनवक्तुंशक्यतेमया॥१८॥गोविंदार्पितचित्तानांजायतेपुण्यभास्करः॥ततोभा
गीरथीश्रेष्ठायत्रविंध्येनसंगता॥१९॥तस्माद्दशगुणंपुण्यंतीर्थराजेप्रजायते॥नामोच्चारणमात्रेण-
गंगायायत्फलंभवेत्॥२०॥नतत्सहस्रतीर्थानांयानात्स्नानान्नवाप्यते॥गंगागंगेतियोब्रूयाद्योजना
नांशतैरपि॥२१॥मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति॥येषांयेषांतुपापानांप्रायश्चित्तंनविद्य
ते॥२२॥तानितानिविनश्यंतिगंगाबिंदोस्तुस्पर्शतः॥येनिंदंतिनदींगंगांतेनरानरकौकसः॥अयं-
ब्रह्मद्रवःसाक्षान्महेशेनधृतःस्वके॥२३॥ब्रह्मविष्णुमहेशाद्याःसर्वेगंगामुपासते॥कलौदशसह-
स्रांतेविष्णुस्त्यक्ष्यतिमेदिनीं॥२४॥तदर्धंजान्हवीतोयंतदर्धंदेवतागणाः॥यावत्तिष्ठतिगंगात्रताव
त्तीर्थानिसंतिच॥२५॥स्वस्वस्थानेनृणांपापंतावद्देवहरंतिच॥यदैवगंगानष्टास्यात्कोवातत्पापमा
हरेत्॥२६॥विचार्यैवंस्कृतीर्थानिगमिष्यंतिधरातले॥तस्मान्मुनीश्वराःसर्वेयावत्तिष्ठतिजान्हवी
॥२७॥तावच्चक्रियतांधर्मस्ततोभूमौनिलीयताम्॥समाधिंगृह्यसद्दांयावत्कृतयुगंभवेत्॥२८
अन्यथाकलिकालेनभ्रंशनीयाभवेत्सुधीः॥ततःश्रेष्ठतराकाशीयस्यानाशोनजायते॥२९॥यदा
श्रयेणगंगापिसर्वपापंव्यपोहति॥काशिकायांनैवनाशोब्रह्मण्यपिमृतोसति॥३०॥तथाकाशीकृ

तंकर्मसकृत्कृतंचापिदुष्कृतम्।।नैवनाशंसमायातिकल्पकोटिशतैरपि।।३१।।यद्दर्शनार्थंगंगापिजाताचोत्तरवा-
हिनी।।तस्यांपंचनदीतीर्थंत्रिषुलोकेषुविश्रुतम्।।३२।।मयातत्रतपस्तप्तंप्रस्वेदात्किरणानदी।।गभस्तीशा
दधोभागेगंगयासहसंगता।।धूतपापापितत्रैवचद्रांशकसमुद्भवा।।३३।।रुद्रांशकसमुद्भूतास्वयंभागीर
थीस्थिता।।विष्णोरंशसमुद्भूतायमुनायत्रसंगता।।३४।।ब्रह्मांशासंभवायत्रदृश्यतेतुसरस्वती।।तीर्थंपं
चनदंनामभूमावेकंविराजते।।३५।।आगतेकार्त्तिकेमासिरौरवंनरकंगताः।।आक्रोशंतेतुपितरोवं-
शेस्माकंभविष्यति।।३६।।कश्चित्सभाग्यवतांश्रेष्ठोगत्वापंचनदेशुभे।।अस्माकंतर्पणंकुर्यान्नरकार्ण
वतारकम्।।३७।।तीर्थराजादितीर्थानिमासेकार्त्तिकमासिके।।स्नानार्थंपंचगंगंतुसमायांतुनसंशयः
।।३८।।कृत्वातुलक्षपापानिस्नात्वापंचनदेशुभे।।बिंदुमाधवमभ्यर्च्य विलयंयांतितत्क्षणात्।।३९।।
जन्ममध्येसकृदपिस्नानंपंचनदेशुभे।।बिंदुमाधवमभ्यर्च्यमुक्तोजन्मांतरेभवेत्।।४०।।दद्याद्रात्रौपं-
चनदेदीपंयोविधिपूर्वकम्।।तस्यवंशेप्रजायंतेबालकाःकुलदीपकाः।।४१।।कार्तिकेमासियोविप्रोगभ
स्तीश्वरसन्निधौ।।शतरुद्रीजपंकृत्वामंत्रसिद्धिःप्रजायते।।४२।।सर्वतीर्थानिगच्छंतितत्तत्तीर्थेदिनेख-
लु।।यात्रार्थंकाशिकास्थानिनयांतिक्वापिसारथे।।४३।।तानिसर्वाणिचायांतिस्नातुंपंचनदेशुभे।।
मणिकर्ण्यपिचायातितुर्यादीनांचकाकथा।।४४।।दुर्लभोमानुषोदेहोदुर्लभाकाशिकापुरी।।तत्रापि
कार्त्तिकेमासिपंचगंगंसुदुर्लभम्।।४५।।येस्नातंकार्त्तिकेमासिसकृत्पंचनदेशुभे।।सर्वतीर्थकृतास्ना
नात्सकृत्कोटिगुणंभवेत्।।४६।।वाराणस्यांतुयैस्नात्वात्रिवर्षंकार्त्तिकव्रतम्।।सोपांगंसांगंयैर्मर्त्यैः कृतं

भर्त्रैकतत्परैः॥५७॥ इहलोके फलं तेषां प्रत्यक्षं जायते खग॥ संपत्यान्वैव संतत्या यशोभिर्धर्मबुद्धिभिः॥ भवं
ति संयुता ब्रूहि किमन्यच्छ्रोतुमिच्छसि॥५८॥ ॥इति सनत्कुमारसंहितायां कार्त्तिकमाहात्म्ये पुण्यतीर्थ
कथनं नाम अष्टमोऽध्यायः॥ ॥ऋषय ऊचुः॥ ॥कार्त्तिकस्य उपांगानि व्रतानि कथयंतु नः॥ कृतेषु ये
षु भवति संपूर्णं कार्त्तिकव्रतम्॥१॥ ॥वालखिल्या ऊचुः॥ ॥आश्विने शुक्लपक्षे तु भवेद्या चैव पूर्णि-
मा॥ तत्रादौ पूजनं कुर्याल्लक्ष्म्या जागरणपूर्वकम्॥२॥ नारिकेलोदकं पीत्वा अक्षक्रीडां समाचरेत्॥ नि
शीथे वरदा लक्ष्मीः कोजागर्त्तीति भाषिणी॥३॥ जगत्संभ्रमते तस्यां लोकचेष्टावलोकिनी॥ तस्मै वित्तं-
प्रयच्छामि यो जागर्त्ति महीतले॥४॥ सर्वथैव प्रकर्त्तव्यं व्रतं दारिद्र्यभीरुभिः॥ एतद्व्रतप्रभावेन वलितो ह्यभ
वद्धनी॥५॥ ॥ऋषय ऊचुः॥ ॥वलितः प्रोच्यते कोसौ लब्धवान्स कुतो व्रतम्॥ एतद्विस्तरतो ब्रूत वालखि
ल्यास्तपस्विनः॥६॥ ॥वालखिल्या ऊचुः॥ ॥ब्राह्मणो वलितो नाम मागधः कुशसंभवः॥ नानाविद्या-
प्रवीणोसौ स्नानसंध्यापरायणः॥७॥ याचनं मरणतुल्यं मन्यतेसौ द्विजोत्तमः॥ गृहागतं स गृह्णाति
नान्यं याचयते क्वचित्॥८॥ तस्य भार्या महाचंडी नित्यं कलहकारिणी॥ मद्भगिन्यः स्वर्णरौप्यालं
कारादिविभूषिताः॥९॥ नानामाल्यांबरधरा दृश्या देवांगना इव॥ अहं दरिद्रस्य गृहे पतितास्मि दुरात्मनः॥
१०॥ लज्जा मां बाधतेत्यर्थं ज्ञातीनां सुखदर्शने॥ धिगस्तु चैतद्विद्याया निर्धनस्य कुलस्य च॥११॥ एवं व-
दति लोकेषु न करोति पतीरितम्॥ संकल्पं कुरु तव त्वेकं यद्यद्भर्त्ता वदिष्यति॥१२॥ विपरीतं करिष्यामि या
वल्लक्ष्मीः प्रसीदति॥ भर्त्तः पाषाणकुड्डेषु चौर्यं कुरु नृपालये॥१३॥ अनीयतां धनं भूरि नो चेत्संताडया-

म्यहम्॥ क्षणंरोदतिनाश्नातिकदाचिद्दुहृस्वादति॥ १४॥ साकपालंताडयतिएवंक्लेशयतेपतिम्॥ सोदांतस्या
स्तचरितंयाचनादुःखभीतितः॥ १५॥ नोवाचवचनंकिंचिद्यथालाभेनतोषितः॥ एकस्मिन्श्राद्धपक्षेतुउ
द्विग्नोभूद्द्विजोत्तमः॥ १६॥ एतस्मिन्वत्सरेसर्वंश्राद्धसामग्रिकंगृहे॥ वर्त्ततेगृहिणीचेयंनकरिष्यतिकिं
चन॥ १७॥ इत्युद्विग्नमनाविप्रोभाषतेनचकिंचन॥ चिंतयाक्लिष्टमेवंतमाययौमित्रउत्तमः॥ १८॥ नाम्ना
गणपतिःख्यातस्तस्मिन्नभ्यागतेसति॥ नोवाचपूर्ववद्वार्त्तांमित्रंवचनमब्रवीत्॥ १९॥ भोभोवलितचि
त्तेतेकिमर्थंचिंतयान्वितम्॥ अवश्यंत्वधियाकुलाचिंतांतेनिर्हराम्यहम्॥ २०॥ ॥वलितउवाच॥ ॥
अधुनापितृपक्षेतुपितुःश्राद्धंसमागतम्॥ सामग्रिकंचास्तिगृहे विपरीतकरीप्रिया॥ २१॥ कथंसं-
पाद्यतेश्राद्धमितिचिंतायुतोस्म्यहम्॥ ॥गणपतिरुवाच॥ ॥धन्योसिकृतकृत्योसिभार्यायस्येदृ
शीगृहे॥ २२॥ ब्रूहित्वंवैपरीत्येनभार्याकार्यंकरिष्यति॥ वलितस्तुतथेत्युक्त्वासायंभार्यामभाषत॥
२३॥ अनर्थकारकेचंडीपरश्वःश्राद्धकंपितुः॥ नस्थापितंधनंयस्मान्मदर्थेयैस्तुपापकैः॥ २४॥ तस्मान्न-
पाकंशीघ्रंत्वंकुरुदुष्टेकरोषिचेत्॥ ब्राह्मणायेधूर्तकाराःशौचाचारविवर्जिताः॥ २५॥ निमंत्र्यास्तेत्वया
भद्रेनोत्तमास्तुकदाचन॥ इतिभर्तृवचःश्रुत्वासंभारस्तुमहान्कृतः॥ २६॥ निमंत्रिताश्चसद्विप्राःका
लेपाकस्तयाकृतः॥ विपरीतैरेवंवाक्यैःश्राद्धंसंपादितंतया॥ २७॥ पिंडदानंततःकृत्वाभार्यांवचनम
ब्रवीत्॥ विस्मृत्यपिंडान्नीत्वात्वंक्षिपगंगाजलेशुभे॥ २८॥ पिंडानीतास्तथेत्युक्त्वाशौचकूपेव्य पक्षि
पत्॥ तद्ज्ञात्वावलितोदुःखीबभूवाकुलिताननः॥ २९॥ कोधाद्विनिर्ययौगेहात्संकल्पंकृतवानिति॥

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



॥लक्ष्मीर्यदिप्रसन्नास्यात्तदान्नंभक्षयाम्यहम्॥३०॥तावत्कंदफलाहारोवनमध्येवसाम्यहम्॥इतिसंक-
ल्प्यविप्रःसगहनेनिर्जनेवने॥३१॥एकोधर्मनदीतीरेकृष्णवल्कलधारकः॥विंशद्दिनान्यवसदागता
चेषपूर्णिमा॥३२॥कालीवंशसमुद्भूतानागकन्याःसुलोचनाः॥निवसंत्योवनेतस्मिन्व्रतंचक्रुरमास
ये॥३३॥श्वेतीकृततंडुलस्यधयागृहंचंद्रगृहोपमम्॥मंडलानिविचित्राणिनानापिष्टैःकृतानिच॥३४
पंचामृतानिरत्नानिदर्पणाच्छादनानिच॥स्थापयित्वेंदिरापूजाकृतातामिःप्रयत्नतः॥३५॥एवंतुप्रथमोया
मोबालाभिर्नीतएवहि॥प्रारब्धंतुततोद्यूतंतुर्यतास्तुनलेभिरे॥३६॥चतुर्भिस्तुविनाक्षाणांक्रीडनंनैवजा
यते॥तस्मान्मृग्यस्तुरीयस्तुक्रिचार्येवंविनिर्गताः॥३७॥कन्यकास्तुनदीतीरेददर्शवलितंद्विजम्॥ज्ञात्वातं
साधुचरितंसचिंतंचसुखाकृतेः॥३८॥उवाचवचनंचारुद्विजकोसिसमागतः॥याह्यद्यक्रीडितुंद्यूतंरमा-
प्रीतिकरंपरम्॥३९॥इत्थंतद्वचनंश्रुत्वावलितोवाक्यमब्रवीत्॥ ॥वलितउवाच॥ ॥द्यूतेनक्षीयतेलक्ष्मी
र्द्यूताद्धर्मोविनश्यति॥४०॥मुग्धवद्वदसेकिंत्वंकथंलक्ष्मीःप्रसीदति॥ ॥कन्योवाच॥ ॥भाषसेत्वंपंडित
वत्कर्मतेस्तितुमूर्खवत्॥४१॥वृषस्यदैवकूपूर्णायांद्यूताल्लक्ष्मीःप्रसीदति॥द्यूतक्रीडांतुकृत्वैवकौतुकंप
श्यचेंदिरम्॥४२॥आरब्धंचततोनीतःक्रीडार्थंस्वस्यमंदिरम्॥दत्त्वातस्मैनारिकेलजलंभक्ष्यादि-
कंतथा॥४३॥आरब्धंचततोद्यूतंश्रीलक्ष्मीःप्रीयतामिति॥लापितानिचरत्नानिकन्याभिर्ब्राह्मणेनतु॥
४४॥कौपीनंलापितंस्वीयंताभिर्निर्जितमेवतत्॥ब्राह्मणःक्रोधसंयुक्तःकिंकर्त्तव्यंमयाधुना॥४५॥उपवी 
तंलापयित्वाततःस्वीयंकलेवरम्॥लापयिष्येतिनिश्चित्यउपवीतंललापसः॥४६॥नाभिर्जितंचतदपि

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

शरीरंलापितंस्वकम्॥ ततोर्धरात्रेसंजातेलक्ष्मीनारायणावुभौ॥४७॥आगतौलोकचरितंद्रष्टुंविप्रंददर्शतुः॥ सुपवीतंविकौपीनंचिंतयातिकृशीकृतम्॥४८॥उवाचवचनंविष्णुः शृणुत्वंपद्मलोचने॥ नवव्रतकरोविप्रः कथंजातःसचिंतकः॥४९॥ तस्मादेनंकुरुक्षिप्रंलक्ष्मीवंतंस्वरूपोचितम्॥ इतिविष्णुवचः श्रुत्वापद्मयासौकृटाक्षितः॥५०॥बालार्चिसहस्रोजातस्तत्क्षणंमदनोपमः॥ ततःकामेनसंविद्धास्तास्तिस्रोनागकन्यकाः॥५१॥ विप्रायवचनंप्रोचुः शृणुविप्रतपोधन॥ यद्यस्माभिर्जितस्त्वंचेद्भर्तास्माकंत्वचोनुगः॥ ५२॥वयंत्वयानिर्जिताश्चेद्यथेच्छसितथाकुरु॥ इतितासांवचः श्रुत्वातथामन्येसचद्विजः॥५३॥क्रीडनात्ताजिताःकन्यागांधर्वेणविवाहिताः॥ तासांरत्नानितास्त्वापिगृहीत्वास्वगृहंययौ॥ ५४॥ प्राप्तंचंडितिरस्कारान्मयेदंभाग्यमुत्तमम्॥ तस्मात्संमानिताचंडीसापिप्रीताबभूवह॥५५॥ चकारस्वामिनश्चाज्ञाभिस्त्वंलक्ष्मीव्रतंत्विदम्॥ बहुरात्रिव्यापिनीयासाचपूर्णाविशिष्यते॥५६॥ एवंलक्ष्मीव्रतंकृत्वानदरिद्रोनदुःखभाक्॥ कथांश्रुत्वाविधानेनव्रतस्यापिफलंलभेत्॥५७॥ ॥इतिसनत्कुमारसंहितायांकार्तिकमहात्म्येइषपूर्णिमाव्रतकथनंनामनवमोध्यायः॥ ॥बालखिल्याऊचुः॥ ॥कृष्णादिमासक्रमतःकार्तिकस्यादिमासतः॥ आकाशदीपदानंतुकुर्वंत्वृषिसत्तमाः॥१॥ तुलायांतिलतैलेनसायंसंध्यासमागमे॥ आकाशदीपंयोदद्यान्मासमेकंनिरंतरम्॥२॥ सश्रीकायश्रीपतयेश्रियानसवियुज्यते॥ आकाशदीपवंशस्तुविंशद्धस्तोत्तमोभवेत्॥३॥ मध्यमोनवहस्तस्यात्कनिष्ठः पंचहस्तकः॥ यथादूरस्थितेर्लोकैर्दृश्यतेतत्तथाचरेत्॥४॥ तथाप्यादिकरंडेषुदीपदानंविशिष्यते॥ वंशस्यनवमांशेनलंबाकार्यापता-

किका॥५॥मयूरपिच्छसुश्टिंवाकलशंचोपरिन्यसेत्॥ विष्णुप्रीतिकरोदीपः पितृउद्धारस्यकारकः॥६॥एका-
दश्यास्तुलार्कोद्वादीपदानमतोपिवा॥ दामोदरायनभसितुलायांलोलयासह॥७॥ प्रदीपंतेप्रयच्छामि-
नमोनंतायवेधसे॥आकाशदीपसदृशंपितृरुद्धारकंनहि॥८॥अत्रार्थेकथयिष्यामिचेतिहासंपुरातन
म्॥विप्रोभवत्त्वविंध्याद्रौहेलिकोनामतापसः॥९॥वेदशास्त्रप्रवीणश्चज्ञानविज्ञानसंयुतः॥तस्यपु-
त्रद्वयंजातंचित्रभानुर्मनोजकः॥१०॥वेदपाठादिनिरतावुभौधर्मपरायणौ॥ द्यूतस्यव्यसनंजातंतयोर्दै
वस्ययोगतः॥११॥व्यसनेनतुतेनैवपितृद्रव्यंविनाशितं॥जातंपरस्त्रीव्यसनंयुवावस्थावतोस्तयोः॥
नजायतेनिर्धनानांद्यूतवेश्यास्त्रियोपिच॥१२॥चौर्यंविधायतांतस्मादेवंमंत्रयतुश्चतौ॥ चक्रतुस्त-
त्रचौर्याणिलोकेज्ञातौविमाविति॥१३॥ततःसंत्यज्यतद्देशंययतुर्गहनंवनम्॥मृगयाजीविनौजातौ
सर्वधर्मबहिष्कृतौ॥१४॥प्रातःस्नानंप्रकुर्वंतावेकंधर्मसमाश्रितौ॥ तस्मिन्वनेनिवसतिभिल्लीद्रोजि
लझिल्लिकः॥१५॥ननानीनामतत्कन्यासौंदर्यस्यैकशेवधिः॥ दृष्ट्वातौतरुणौशूरावुभावपितयावृतौ॥१६॥
तयासर्वंपितुर्द्रव्यंताभ्यांसर्वंसमर्पितम्॥एकंधर्मंसापिचक्रेपित्रर्थेदीपदानकम्॥१७॥एकदातुतया
प्रोक्तौननान्याभ्रातरावुभौ॥अधमज्जनकश्चाद्यलुंठनीयोनकोपिहि॥१८॥उभावपिसुवांविप्रौमया
भोज्यौयथेप्सितम्॥अन्येपिकेचिद्विप्राश्चेन्मयाभोज्यास्तुसर्वथा॥१९॥ब्रह्मचर्यव्रतंचाहंयुवाम
पितथाविधौ॥मयासहनसंयोगःक्रियतामितिसाहतौ॥२०॥ ततस्तयातिसंभारान्मांसानिविविधा १५
निच॥शाकपाकादिकंसर्वंतयानिष्पादितंततः॥२१॥ताभ्यांभक्तंयथेच्छान्नंबहूतीवकनीयसा॥

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

तस्त्वजीर्णमभवदसाध्यमविलंबकम्॥ ततःकालवशंप्राप्तोवनेतस्मिन्मनोजवः॥ २२॥ बध्वायमभटैर्नीतः संयमिन्यांचकुद्दितः॥ चित्रगुप्तस्ततंदृष्ट्वादूतान्वाक्यमथाब्रवीत्॥ २३॥ नयत्त्वेनंतुपापिष्ठमंधंतामिस्रसंज्ञ के॥ त्यजंतु कुंभीपाकेचशीर्षसंस्फोटयंतुच॥ २४॥ कुंभीपाकेततःक्षिप्तोनायंतस्मिन्विपच्यते॥ अंधता मिस्रकेक्षिप्तस्तत्रपश्यतिहृष्टवत्॥ २५॥ इत्याश्चर्ययुतादूताधर्मराजंव्यजिज्ञपुः॥ ॥ दूताऊचुः॥ ॥— कुंभीपाकेभिसंतप्तेक्षिप्तोस्माभिर्मनोजवः॥ २६॥ नतस्यजायतेपीडास्नातिमत्स्योयथाजले॥ ॥यमउ वाच॥ ॥आनीयतांततस्तूर्णमीषत्पुण्यंमनोजवम्॥ २७॥ धर्मराजाज्ञयातैस्तु समानीतोस्यसन्निधौ॥ दृ ष्ट्वातंधर्मराजोपिदूतानाज्ञापयेदिति॥ २८॥ सदास्यस्नानशीलत्वात्कुंभीपाकोनबाधते॥ न नान्याकल्पितोदीपः पित्रर्थेगगनेशुभः॥ २९॥ निक्षिप्तएवतद्धस्तात्तद्धिंसांशफलंतुतत्॥ अनेनलब्धंतस्यैवपुण्यंतामिस्रनाशन म्॥ ३०॥ पुण्यद्वयभरादस्यनिरयेवसतिर्नहि॥ तस्मात्पिशाचदेहोयंक्रियतांकर्मभोगभाक्॥ ३१॥ ततःपि शाचोभूत्वासौतस्मिन्नेवतुपिप्पले॥ गृहादिभ्योदत्तमन्नंभुक्त्वातत्रैवतिष्ठति॥ ३२॥ एकदातुचतुर्दश्यांसं ध्याकालेउपस्थिते॥ कृष्णपक्षेदीपदानंकर्तुंपितृहितायसा॥ ३३ ननान्युपगताभर्त्तामृगयार्थंक्वचिद्गतः॥ स्नात्वास्वच्छांबरंधृत्वानानालंकारभूषिता॥ ३४॥ ययौसादीपदानार्थंआक्रांतातेनरक्षसा॥ पूर्वजन्मनिसं बंधोयेषांयेषांप्रजायते॥ ३५॥ तएवभूतैर्धर्ष्यंतेनकदाचित्परेजनाः॥ तेनधृष्टातुसाबालाक्षणान्मग्नाबभूव ह॥ ३६॥ भुक्त्वाभूषणकार्यंचजहासचरुरोदच॥ गीतंगायतिचात्मानंकदाचित्ताडयत्यपि॥ ३७॥ नृत्यंच कुरुतेक्वापिक्षणाद्धंताश्वखादति॥ सर्वेभिल्लाभिल्लपत्न्यस्तद्दासादासिकास्तथा॥ ३८॥ मातृपुत्रादिकाः

सर्वेआगतास्तुसहस्रशः॥ कश्चिद्वदतिवाचोयंकश्चिद्वक्तिपिशाचकः॥ ३९॥ डाकिनींशाकिनींकेचिदभिचारम-
थापरे॥ यक्षदैवंदानवंचधत्तूरादिकभक्षणम्॥ ४०॥ तर्कयंतिपरेलोकादुष्टजीवस्यदंशनम्॥ ध्रियतांबध्यता
मकेधूप्यतांदीप्यतांपरे॥ ४१॥ कश्चिन्मंत्रयतेतांचभेषजंचापिकुर्वते॥ एतस्मिन्नंतरेभर्त्राचित्रभानुःसमा
ययौ॥ ४२॥ आकारितास्तुमंत्रज्ञाउपायाबहवःकृताः॥ कंचित्ताडयतेसापिकंचिद्वदतिगच्छति॥ ४३॥ कंचि
द्भीषयतेत्यर्थंवल्गत्यपिकदाचन॥ बलिदानादिग्रहणामिगच्छामीतिवदत्यपि॥ ४४॥ कदाचिदारकेणाति
घ्नत्यतिविमूर्छिता॥ भिनत्तुलूखलंकापिगृहंपातयतिक्वचित्॥ ४५॥ एवंजातालसाध्यासागृहमध्येनिवेशि
ता॥ एकदातेनमार्गेणबहुशःकेरलाजनाः॥ ४६॥ पंचह्रदोदकंग्रत्यकेरलेश्वरशासनात्॥ भाद्रेमासिप्रस्थि
तास्तेतद्गृहेवसतिःकृता॥ ४७॥ तेषांमध्येसुधीःकश्चिद्वाचौपांचनदस्तवम्॥ अपठद्रामरक्षादिविष्णुपंजर-
कादिच॥ ४८॥ तच्छ्रुत्वात्तुपिशाचोसौजातःकस्तस्थमानसः॥ संछेद्यबंधनाद्यंचवत्सक्ताचेशंकसंस्थितः॥
४९॥ ततस्तेनतुभक्तेनशयनास्तरणःकृतः॥ चिक्षेपस्थानशुध्यर्थंपंचगंगोदकंचतैः॥ ५०॥ इतस्ततस्तच्छि
रसिबिंदवःपतिताःस्वगा॥ ज्ञानंतस्यसमुत्पन्नंबिंदुस्पर्शनमात्रतः॥ ५१॥ उवाचवचनंचारुकेभवंतःसमा
गताः॥ तोयमेतत्स्थितंकुत्रकिंवाज्ञानोदकंत्विदम्॥ ५२॥ मह्यंकिंचित्प्राशनार्थंदीयतांस्वल्पमेवहि॥
कृपालुनातेनदत्तंजलंपांचजलंशुभम्॥ ५३॥ तत्पीत्वाविमलाबुद्धिःक्षणादेवाभ्यजायत॥ पूर्वजन्मच
सस्मारयमलोकागमंतथा॥ ५४॥ गत्वाभ्रातुःसचरणौधृत्वादीनंरुरोदह॥ आत्मनश्चगतिंप्रोक्ताउ-
पायोस्यविधीयताम्॥ ५५॥ भ्रातासर्वेकार्पटिकाःपृष्टास्तेऊचुरादरात्॥ ॥कार्पटिकाऊचुः॥ ॥जा १६

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

नानिकाशितीर्थनांमहिमानंसईश्वरः॥५६॥यज्जलस्पर्शमात्रेणपिशाचोभूत्ससात्विकः॥ अस्मभ्यंदीयतेरा
ज्ञाएकोग्रामश्चवार्षिकम्॥५७॥स्वर्णमुद्राशतंकाशीजलाहरणहेतवे॥गम्यतांपंचदिवसैर्भवद्भिः काशिका
पुरीम्॥५८॥तिष्ठंतिपंडितास्तत्रविचार्यागतिरुत्तमा॥एवंतद्वचनंश्रुत्वागृहीत्वासाधनंबहुः॥५९॥सकुटुं
बःकाशिकांसददर्शहरसेविताम्॥ काशीप्रवेशकालेतुगणैरौद्रैर्निराकृतः॥६०॥तच्छरीरात्पिशाचोसौ
उवाचकरुणंवचः॥ भ्रातर्गणामांरुंधंतिमामोद्धारोविधीयताम्॥६१॥ इतिश्रुत्वावचस्तस्यचित्रभानुः
समागतः॥ काश्यांसकलवृत्तांतंपंडितेभ्योन्यवेदयत्॥६२॥ तन्मोक्षणायचादिष्टोदेयआकाशदीपकः॥
आकाशदीपदानेनपिशाचोपिसमागतः॥६३॥वाराणस्यांननान्याःसपुत्रोभद्गुणसंयुतः॥कृत्वासर्वेपिते
काशीवासंमोक्षमवाप्नुवन् ॥६४॥नमःपितृभ्यःप्रेतेभ्योनमोधर्मायविष्णवे॥ नमोयमायरुद्रायकांतार
पतयेनमः॥६५॥मंत्रेणानेनयेमर्त्याःपितृभ्यःस्वतुदीपकम्॥प्रयच्छंतिगतायेस्युर्नरकेयांतितेपिवै॥-
६६॥उत्तमांगतिमिच्छंतिदीपदानंमयेरितम्॥लक्ष्मीसंततिसिध्यर्थमारोग्यायप्रदीपयेत्॥६७॥आका
शेदीपदानंतुतथाश्रीविष्णुतुष्टये॥६८॥ ॥इतिसनत्कुमारसंहितायांकार्त्तिकमाहात्म्येदीपमहिमाक
थनंनामदशमोऽध्यायः॥ ॥कार्त्तिकस्यासितेपक्षेद्वादशीवत्ससंज्ञिता॥गोधूलिकालसंयुक्ताद्वाद
शीवत्सपूजने॥१॥वत्सपूजावटेचैवकर्त्तव्याप्रथमेहनि॥सवत्सांतुल्यवर्णांचशालिनींगांपयस्विनीम्॥
चंदनादिभिरालिप्यपुष्पमालाभिरर्चयेत्॥२॥तद्दिनेतैलपक्वंचस्थालीपक्वंयुधिष्ठिर॥गोक्षीरंगोघृतंचैव
दधिक्षीरंचवर्जयेत्॥३॥दिनांतेसूर्यबिंबार्धंद्विभयत्रघटीदलम्॥ ततोनीराजनंकार्यंनिरीक्ष्येवशक्तमा

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



शुभम्॥ नानादीपान्प्रकल्प्यादौ स्वर्णपात्रादिसंस्थितान्॥४॥नीराजयेद्दीपपूर्वंनिरीक्षेतशुभाशुभम्॥—
लापयित्वासर्वदीपानुत्तराभिमुखान्न्यसेत्॥५॥मुख्यादीपानवप्रोक्ताअन्यानपिचकल्पयेत्॥ज्वालाचेद्द
क्षिणासंस्थासतेजस्काशिखान्विता॥६॥स्थिराचेत्सौख्यदाप्रोक्ताविपरीतातुदुःखदा॥कार्त्तिकेकृष्णपक्षे
तुद्वादश्यादिषुपंचसु॥७॥तिथिषूक्तःपूर्वरात्रेनृणांनीराजनोविधिः॥पक्षंसंसूचयंत्यादौद्वितीयोमास
मेककम्॥८॥तृतीयेऋतवःप्रोक्ताश्चतुर्थेत्वयनंतथा॥वर्षंतुपंचमेदीपेशुभाशुभविनिर्णयेत्॥९॥सूर्यां
शसंभवादीपाअंधकारविनाशकाः॥त्रिकालेमांदीपयंतुदिशंतुचशुभाशुभम्॥१०॥अभिमंत्र्यचमंत्रे
णततोनीराजयेत्क्रमात्॥आदौदेवांस्ततोविप्रान्हस्तिनश्चतुरंगमान्॥११॥ज्येष्ठान्श्रेष्ठानजघन्यांश्च-
मातृमुख्याश्चयोषितः॥ततोनीराजितान्दीपान्स्वस्वस्थानेषुविन्यसेत्॥१२॥रूक्षेर्लक्ष्मीविनाशःस्या
त्श्वेतेरन्नक्षयोभवेत्॥अतिरक्तेषुयुद्धानिमृत्युःकृष्णशिखेषुच॥१३॥एकांगीनामगोपालातयैतच्च
व्रतंकृतम्॥धनधान्यसमायुक्ताजातावर्षत्रयेणसा॥१४॥ ॥ऋषयऊचुः॥ ॥काएकांगीकथंजाता-
धनधान्यसमन्विता॥एतद्विस्तरतःश्रोतुंइच्छंत्येतेतपोधनाः॥१५॥ ॥वालखिल्याऊचुः॥ ॥आसी
त्सुराहृषीकेशःसचैलोधेनुपालकः॥गवामष्टसहस्राणितद्गृहेनिवसंतिच॥१६॥वत्सादीनांनसंख्या
स्तितथालोकगवामपि॥तस्यैकाकन्यकाजाताएकांगीनामविश्रुता॥१७॥नापुत्रस्यतुलोकोस्तीत्यादि-
वाक्यैःप्रपंचितः॥पुत्रार्थंतुमहायत्नंसचैलोसावथाकरोत्॥१८॥गोदानानांसहस्रंतुनीलोत्सर्गशतं १७
तथा॥कृतंसचैलकेनात्रततःपुत्रोभ्यजायत॥१९॥दुंदुभिर्नामविख्यातस्तेषामासीत्पुरोहितः॥अती

वक्रकुटिलोधूर्तोलोभिनांसशिरोमणिः॥२०॥लोभेच्छयातुतेनोक्तंमूलजातोहिबालकः॥अन्यत्नपृष्टंकिमपिकिंचि
द्दत्वाबिदायितः॥२१॥आकारितापितृभ्यांतुएकांगीचंचलेक्षणा॥नयेमंबालकंशीघ्रंसुखेदत्वाघृतंमधु॥२२
क्षिपस्वतूर्णंगंगायामस्माकंकरवस्तुकृद्भये॥एकांगीतंसमादायदययाविष्टमानसा॥२३॥आस्थापयद्दूरेतंम
हावृक्षस्यकोटरे॥वारंवारंसमागत्यदिवसेषुनिशासुच॥२४॥तस्मैपयःपाययित्वापुनर्यातिस्वकंगृहम्॥
जातोसौवर्षमात्रेणकलभाषीसबालकः॥२५॥श्रुत्वाश्रुत्वावदेद्वाक्यंनानापक्षिचतुष्पदाम्॥एकांग्यपिचसं
जातायौवनाक्रांतदेहिका॥२६॥एकांगींदुंदुभिःप्राहएकांतेवचनंलघु॥मात्वंवरयभद्रंतेकुलपूज्योस्मितेन
घे॥२७॥स्वर्णाढ्यांतेकरिष्यामिनानावस्त्रोपशोभिताम्॥इतितद्वचनंश्रुत्वाएकांगीवाक्यमब्रवीत्॥२८॥-
धिङ्मूर्खकाणदुष्टत्वमन्यहंत्वाभीरकन्यका॥ब्रह्मबीजसमुत्पन्नःकथंमांवरयिष्यसि॥२९॥ ॥दुंदुभिरुवाच
॥ ॥चतुर्वर्णाकन्यकापिविवाह्या ब्राह्मणैःशुभे॥पितामहेनेदमुक्तंतस्माद्भार्याभवस्वनः॥३०॥ ॥एकांग्यु
वाच॥ ॥याचकंनवरिष्यामिनचकाणंकुरूपकम्॥सुशीलंचसुरूपंचभर्त्तारंवरयाम्यहम्॥३१॥नानाप्र
कारैःसाबालादुंदुभिनाथलोभिता॥नाभूद्यदातस्यवश्यातदाक्रोधंचकारसः॥३२॥अन्यायेध्रियतांचे-
यंताडनीयामयातथा॥एकांतेवाघातनीयाछिद्रमन्वेषयाम्यहम्॥३३॥इत्थंविचार्यविप्रोसौतस्याःपश्य
तिकौतुकम्॥निलीयदिवसेविप्रोतयासार्द्धंगतोवने॥३४॥अपश्यद्दूरतश्चेष्टांतस्यादुष्टोद्विजाधमः॥तया
निष्काशितोबालोदुग्धंदत्वायथेप्सितम्॥३५॥क्रीडयित्वाक्षणंतत्रपश्चात्संस्थापितःपुनः॥अकरोत्वग-
वांरक्षांविप्रेणेत्थंविलोकितम्॥३६॥आगत्यासौगृहेशीघ्रंसचैलंवाक्यमब्रवीत्॥अहंसमिक्कुशाद्यर्थं

गतोभागीरथीतटे ॥ ३७ ॥ एकांगीतत्रसंदृष्टाक्रीडंतीयवनैःसह ॥ यवनाद्बालकोजातःस्थापितःकोटरेसच ॥ ३८ ॥-
अहोनष्टंतवकुलंनरकेषुपतिष्यति ॥ जात्यग्रेकथयिष्यामिनोचेत्त्वांत्यजदुर्मते ॥ ३९ ॥ तस्याःपुत्रंचतांचापि-
बध्वापृष्ठेवृषस्यच ॥ वनमध्येत्यजक्षिप्रंबहिष्कारोन्यथाभवेत् ॥ ४० ॥ राज्ञाचदंडनीयस्त्वंजातिभिश्चबहि
ष्कृतः ॥ कन्यकारक्षणादेवनरकेपिपतिष्यसि ॥ ४१ ॥ सचैवंत्रासितस्तेनजगामगहनंवनम् ॥ तावुभौवृष
पृष्ठेतुबध्वात्यक्त्वावनेतदा ॥ ४२ ॥ वृषोपितांसमादायगतोदैवस्ययोगतः ॥ हरिद्वारंतयासार्द्धं बंधःशिथि
लतांययौ ॥ ४३ ॥ बंधाद्विनिर्गतासातुबालकोपिविमोचितः ॥ वृषभस्तेनपाशेनबद्धोबालिकयातथा ॥ ४४
॥ जानातिवनमार्गान्सावृषेणादायशाद्वलम् ॥ कंदादिकंभक्षयित्वाकुटिंतत्रचकारसा ॥ ४५ ॥ तृणान्यानी-
यविक्रीतेतेनैववृषभेणसा ॥ पुष्णातितेनद्रव्येणभ्रातरंवृषभंतथा ॥ ४६ ॥ आगतेकार्त्तिकेमासिलोकाः-
स्नानार्थमाययुः ॥ दानार्थंतुसमानीतास्तैर्गावोदेशदेशतः ॥ ४७ ॥ इमांगोपालिकांज्ञात्वारक्षणायददुश्चते ॥
अनयाभूयसीसेवाआरब्धातुगवांस्वगा ॥ ४८ ॥ संदृश्यलोकास्स्वीयागाबह्वेनामभ्यनंदयन् ॥ इषासितहरेरस्ति-
थ्यांगोपूजावैष्णवैःकृता ॥ ४९ ॥ तांदृष्ट्वाबालिकासापिपूजांचक्रेयथाविधि ॥ अतिभक्त्याबालिकयाचेत्थंवर्ष
त्रयंकृतम् ॥ ५० ॥ तस्यांदैववशात्तत्रसचैलेशःसमाययौ ॥ स्नानायकार्त्तिकेमासेगंगाद्वारेमुनीश्वराः ॥ ५१ ॥
दृष्ट्वावनेबालिकासावनकौतुकदर्शिना ॥ पृष्ट्वोदंतंततस्तस्याःपाणिग्रहमचीकरत् ॥ ५२ ॥ मदाज्ञयाहृषीकेशः
समागत्याथवेदितः ॥ दुंदुभिश्चधृतस्तत्रधृतस्तस्याःपिताअपि ॥ ५३ ॥ धिक्कृतोदुंदुभिस्तेनत्वयाशप्तोप्य- १८
सौपुनः ॥ अद्यारभ्यनराल्लोकेकाणेविश्वासकारकाः ॥ ५४ ॥ अवश्यंविलयंयांतिकार्त्तिकेनत्वापाम्यहम् ॥

इत्युक्त्वार्पितस्तस्मै स चैलाय सबालकः॥ ५५॥ गोव्रतं तु हृषीकेशस्योपदिष्टं तया स्वग॥ पित्रोर्धनादिकं दत्वा
भर्त्रा सार्द्धं जगाम सा॥ ५६॥ तस्माद्गोपूजनं कार्यं द्वादश्यां कार्त्तिकस्य तु॥ एतद्गोव्रतमाहात्म्यं श्रुत्वा कुर्वंति ये नराः
॥ ५७॥ ते गोव्रतप्रभावेन न गोभिर्विच्युता भुवि॥ गोपराधः कृतो येन स व्रताद्विलयं व्रजेत्॥ ५८॥ ॥ इति सनत्कुमा
रसंहितायां कार्त्तिकमाहात्म्ये गोपूजाकथनं नामैकादशोऽध्यायः॥ ॥ वालखिल्या ऊचुः॥ ॥ कृष्णपक्षे चतुर्दश्यां
मासि चाश्वयुजे तथा॥ दीपोत्सवसमीपं तु व्रतमेतत्समाचरेत्॥ १॥ प्रातः स्नात्वा त्रयोदश्यां कृत्वा वै दंतधावन
म्॥ त्रिरात्रनियमं कृत्वा गोविंदे भक्तितत्परः॥ २॥ कार्य एतद्व्रतस्यांते तथा गोवर्धनोत्सवः॥ त्रिमुहूर्त्ताधिका यास्या
परवेधा न दोषभाक्॥ ३॥ आश्विनस्यासिते पक्षे त्रयोदश्यां निशामुखे॥ यमदीपं बलिं दद्याद् अपमृत्युर्विनश्यति
॥ ४॥ एकदा धर्मराजेन दूताः सर्वेऽपि चैकतः॥ कृत्वा प्रोवाच वचनं सत्यं ब्रूत ममाग्रतः॥ ५॥ उच्चावचान्मारयतां भव
तां जायते दया॥ क्वचिज्जाताथवा नैव सत्यं ब्रूत ममाग्रतः॥ ६॥ ॥ दूता ऊचुः॥ ॥ इंद्रप्रस्थे महाराजो हंसो नाम ब
भूव ह॥ एकदा मृगयार्थं स गतः सैन्यसमावृतः॥ ७॥ तत्रापश्यन्मृगं चैकं मृग्या सह विनिर्गतम्॥ स्त्रीतासक्त्या मृगी
तेन हरिणार्थं कृतो श्रमः॥ ८॥ मृगोऽपि भूपतिं दृष्ट्वा पलायनपरोऽभवत्॥ तत्पृष्ठे तु हयस्त्यक्तः स्वकीयस्तेन भूभुजा
॥ ९॥ अदृश्यतां क्वचिद्यातिदृश्योऽसौ जायते क्वचित्॥ देशाद्देशांतरं यातः चाराग्रेण प्रपीडितः॥ १०॥ आमध्याह्नं
गतस्तस्य पृष्ठे राजहयस्थितः॥ मृगः पलाय्य गतवान् राजापि श्रमसमूर्छितः॥ ११॥ घर्म्माक्रांतः पिपासार्त्तो न द
दर्श जलं क्वचित्॥ वटच्छायां क्षणं सेव्य जलाधारं ददर्श सः॥ १२॥ सैन्यं न दृष्टवान्मार्गं जलस्यापि न दृष्टवान्॥
क्षुधया पीडितो ह्यासीदश्वोऽपि श्रमपीडितः॥ १३॥ आडीशब्दं स शुश्राव क्षुधितास्ताः प्रयांति हि॥ प्रदत्त्वयाश्वा

स्यतच्छायांचलितस्तेनवर्त्मना॥१४॥क्रोशोपरिददर्शाग्रेकासारंपंकजान्वितम्॥हंसकारंडवाकीर्णंरथांगैश्चमन-
नोहरम्॥१५॥नानापद्मैःपरिवृतमुच्चलत्तिमिचंचलम्॥नृपोदृष्ट्वातत्तडागंकृतकृत्यइवाभवत्॥१६॥स्वयंपीत्वा
जलंपश्चाद्अश्वस्यापिनिवेदितम्॥ददर्शधीवरांस्तत्रनानामत्स्योपहिंसकान्॥१७॥तानपृच्छन्महाराजोग्रामो
स्तिनिकटेक्वचित्॥ ॥मत्स्यघातकाऊचुः॥ ॥क्रोशादूर्ध्वंतुभगवान्ग्रामोस्तिनगरोपमः॥१८॥संवर्त्तोनामत
त्रत्यःसामंतकमहीपतिः॥स्वगृहद्वारिवासार्थंपांथिकानांतुमंडपः॥१९॥रचितोस्तिचगंतव्यंलयातत्रसुखेच्छ
या॥स्नानपानादिकाद्यानांसौकर्यंतत्रवर्त्तते॥२०॥ ॥राजोवाच॥ ॥इंद्रप्रस्थंस्थलादस्मात्कियद्दूरेव्यवस्थितम्
॥केनमार्गेणगंतव्यंप्रब्रूध्वंमत्स्यघातकाः॥२१॥ ॥धीवराऊचुः॥ ॥अस्मान्नैर्ऋत्यकोणेतुनवयोजनदूरतः॥
इंद्रप्रस्थपुरंरम्यंवर्ततेराजसेवक॥२२॥इतितद्वचनंश्रुत्वाअद्यगंतुंनपार्यते॥गृहप्रतीतिर्निश्चित्यग्राममध्ये
ययौनृपः॥२३॥तेजोविशेषानुमितःकश्चित्प्रौढःपुमानयम्॥इतिज्ञात्वातुरवट्टैकादत्तास्मैवेशनायच॥२४॥भक्ष्य
पार्थंसमानीताअजाक्षिपिटादधि॥शीततोयंसमानीतंकिंचिद्भुक्तंनृपेणतत्॥२५॥रात्रौतत्रैवसंसुप्तो
जागर्त्तिचपुनःपुनः॥ग्रामेशजातपुत्रस्यषष्ठाहस्तद्दिनेभवत्॥२६॥ददर्शनृपतीरात्रौनारीयातिचतद्गृहम्
॥दीर्घात्यंतंरूपवतीलेखनीहस्तशालिनी॥२७॥तदंचलंगृहीत्वासःपर्यपृच्छतकासिच॥नोवाचवचनंसा
तुनृपेणाक्षेपितापुनः॥२८॥बलात्कारेणांचलंसागृहीत्वाभ्यंतरेविशत्॥साहंकारोनृपोभूत्वास्थितवांस्तांप्र
तीक्षयन्॥२९॥पुनःसापिसमायातातूर्णमेववरानना॥बलात्कारेनृपतिनाकरेधृत्वावचोब्रवीत्॥३०॥कालं
कंजपलाशाक्षिसत्यंब्रूहिममाग्रतः॥अन्यथात्वांहनिष्यामिरोचतेयत्तथाकुरु॥३१॥ ॥जीवंतिकोवाच॥ १९

॥मारितश्च मयात्वंस्याद्दुर्भवत्वात्करक्षितः॥मुंचदूर्णेनचेत्त्वांवैहनिष्यामिनसंशयः॥३२॥ ॥राजोवाच॥ ॥आज्ञात्वा
तवद्दत्तंतुनत्यक्षामिकदाचन॥क्षत्रियःसन्यदाभीतस्तदासनरकंव्रजेत्॥३३॥अवश्यमेवमर्त्तव्यंजीवितं-
नास्तिचस्थिरम्॥सर्वथाक्षत्रियेणैवनत्याज्याहंकृतिःक्वचित्॥३४॥समर्थस्त्वांहंतुमहंस्त्रीत्वादादौन
हन्यते॥जिघांसंतंजिघांसीयादवध्यंप्राणसंशये॥३५॥इतितद्वचनंश्रुत्वाषष्ठीवचनमब्रवीत्॥त्वंस्वधर्म-
रतोयस्मात्तस्मात्तुष्टास्म्यहंनृप॥३६॥अहंजीवंतिकादेवीललाटेक्षरमालिकाम्॥जातकस्यलिखित्वाथ
स्वर्गंयास्यामिसत्वरम्॥३७॥ ॥राजोवाच॥ ॥मातस्त्वयाकिंलिखितंतदिदानींनिगद्यताम्॥नमिथ्याले
खनंतेस्तितस्मात्संशृणुयाम्यहम्॥३८॥ ॥जीवंतिकोवाच॥ ॥विवाहस्यचतुर्थेन्हिसर्पसंसर्गदोषतः॥प्रा
क्कर्मतोस्यनिर्वाणंलिखितंतुमयानृप॥३९॥इत्युक्त्वासातदादेवीतत्रैवांतरधीयत॥अत्याश्चर्यंनृपोमत्वावि
भ्रमत्रकरोम्यहम्॥४०॥निश्चित्येत्थमुषःकालेप्रस्थितोनृपतिःस्वयम्॥ततोमंत्रिणमाहूयवाक्यमेतदुवाचह
॥४१॥भांडारिकंधनंगृह्यतूर्णंकुरुममाज्ञया॥यमुनायांदृढंगेहंसंधिछिद्रविवर्जितम्॥४२॥सर्पवैद्यास्तथैके
चिद्येमृत्युंजयजापकाः॥सर्वेषांमासिकंकृत्वास्थाप्यास्तेभ्यंतरेजनाः॥४३॥इतईशानदिग्भागेग्रामोस्तिन
गवाभिधः॥सामंतकोस्तितद्ग्रामेनाम्नाहेमनकोमहान्॥४४॥सकुटुंबःसमानेयःस्थाप्यतांसचमंदिरे॥
जातोयोबालकस्तस्यसतुपाल्यःप्रयत्नतः॥४५॥इतिराजवचःश्रुत्वाप्रेषितामहतीचमूः॥हेमनानयना-
र्थंतुमंत्रिणस्तांसमाविशन्॥४६॥ग्रामंसंवेष्ट्यसेनेशोहेमनंवाक्यमब्रवीत्॥हेमनःकंपसंयुक्तोवातेनकद
लीयथा॥४७॥आगतःपूर्वदिवसेकश्चिद्भूपस्यसेवकः॥पैशून्यंवाकृतंतेनयतःसेनासमागता॥४८॥ना

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



पराधंमहीपस्यनजानेकिंभविष्यति॥ ग्रामोवालुंठनीयोवावध्योवास्मिन्नृपाज्ञया॥४९॥ इतिचिंतयमानंतंसेने
शोवाक्यमब्रवीत्॥ भयंत्यक्त्वाशक्रचंमुंचनृपाज्ञांकुरुवेगतः॥५०॥ कुटुंबंबालकंगृह्ययाहींद्रप्रस्थमादरात्॥ तथै
वनगवेशेनगृहीत्वोपायनंबहु॥५१॥ दर्शनंकृतवान्राज्ञस्तेनासौस्थापितोगृहे॥ अपमृत्युविनाशाययानिदा
नानिभूतले॥५२॥ कृतानिजपहोमाश्चसर्वेराज्ञातुकारिताः॥ दर्शनार्थंसमायातोबालकस्यतुभूपतिः॥५३॥
नानोपायैर्वर्धितोसौजातःषोडशवार्षिकः॥ सुसंजयस्यकन्यैकासर्वलक्षणसंयुता॥५४॥ दृष्ट्वाग्रहांश्चचिन्
ह्यानिकुलंशीलंसुरूपताम्॥ दृष्ट्वास्वयंभूपतिनाबालकार्थंतुयाचिता॥५५॥ हर्षाकुलाःसर्वजनाविवाहश्चस्व
यंकृतः॥ ततःश्चतुर्थेदिवसेप्राप्तेतुनृपतिःस्वयम्॥५६॥ आत्मीयानेवसंगृह्यतस्यरक्षामचीकरत्॥ जाय
तेसर्वतश्चेष्टिरायुर्वर्द्धनकारिका॥५७॥ विनानिमेषंनृपतिस्तंपश्यतिचबालकम्॥ वयंतत्रगताःस्वामि
न्कालाज्ञावशतोयम॥५८॥ तदाद्यासमुत्पन्नाकथमेषोहिबध्यताम्॥ अतिदुःखेनसंतप्तःप्रेतपत्यंत
रोरगः॥५९॥ नृपस्यनासिकामध्येनृपःशिंकामथाकरोत्॥ तदानिर्गत्यसहसादंशितस्तेनबालकः॥६०
हाहाकारोमहानासीज्जीविताद्भ्रंशितःसतु॥ तज्जन्मदिनमारभ्यत्वहिंसाव्रतकारिणः॥६१॥ जातान्नृपाज्ञ
यालोकास्तद्भ्रात्रुदृष्टिकारकाः॥ दयातत्रसमुत्पन्नास्माकंसूर्यसंभव॥६२॥ यथानजीविताद्भ्रंश्येदी
दृशेतुमहोत्सवे॥ तथोपायंब्रूहियमकृपांकृत्वास्मदग्रतः॥६३॥ ॥यमउवाच॥ ॥आश्विनस्यासितेप
क्षेत्रयोदश्यांनिशामुखे॥ प्रतिवर्षंतुयोदद्याद्गृहद्वारेस्कदीपकम्॥६४॥ मंत्रेणानेनभोदूताःसमानेयः २०
सनोत्सवे॥ प्राप्तेपमृत्यावपिचशासनंक्रियतामम॥६५॥ मृत्युनापाशदंडाभ्यांकालेनचमयासह॥ त्रयो

दद्यांदीपदानात्सूर्यजः प्रीयतामिति॥६६॥मंत्रेणानेनयोदीपंद्वारदेशेप्रयच्छति॥उत्सवेचापमृत्योश्चभयंतस्य
नजायते॥६७॥तस्मात्मुनिवराःसर्वैर्दीपंदद्युर्निशामुखे॥६७॥ इतिसनत्कुमारसंहितायांकार्त्तिकमाहात्म्ये
द्वादशोध्यायः॥ ॥वालखिल्याऊचुः॥ ॥पूर्वविद्धचतुर्दश्यामाश्विनस्यसितेतरे॥पक्षेप्रत्यूषसमयेस्ना
नंकुर्यात्प्रयत्नतः॥१॥अरुणोदयतोन्यत्ररिक्तायांस्नातियोनरः॥ तस्याब्दिकभवोधर्मोनश्यत्येवनसंश
यः॥२॥तथाकृष्णाचतुर्दश्यामाश्विनेर्कोदयेस्मृताः॥ यामिन्याःपश्चिमेयामेतैलाभ्यंगोविशिष्यते॥३॥
यदाचतुर्दशीनस्याद्विदिनेचेद्विधूदये॥दिनद्वयेभवेच्चापितदापूर्वैवगृह्यते॥४॥बलात्काराद्धठाद्वापि-
शिष्टत्वान्नकरोतिचेत्॥तैलाभ्यंगंचतुर्दश्यांरौरवंनरकंव्रजेत्॥५॥तैलेलक्ष्मीर्जलेगंगादीपावल्याश्च
तुर्दशी॥अपामार्गमथोतुंबींप्रपुंनाटमथापरम्॥६॥भ्रामयेत्स्नानमध्येतुनरकस्यक्षयायवै॥वारत्र
यंत्रिवारंचपठित्वामंत्रमुत्तमम्॥७॥सीतालोष्ठसमायुक्तंसकंटकदलान्वितम्॥हरपापमपामार्गभ्राम्य
माणःपुनःपुनः॥८॥इष्टबंधुजनैःसार्द्धमेतत्स्नानंसमाचरेत्॥स्नानांगतर्पणंकृत्वायमंसंतर्पयेत्ततः॥९
॥यमायधर्मराजायमृत्यवेचांतकायच॥वैवस्वतायकालायसर्वभूतक्षयायच॥१०॥औदुंबरायदध्ना
यनीलायपरमेष्ठिने॥वृकोदरायचित्रायचित्रगुप्तायतेनमः॥११॥चतुर्दशैतेमंत्रास्युःप्रत्येकंचनमोन्वि
ताः॥एकैकेनतिलैर्मिश्रान्दद्यात्त्रीनुदकांजलीन्॥१२॥यज्ञोपवीतिनाकार्यंप्राचीनावीतिनाथवा॥दे
वत्वंचपितृत्वंचयमस्यास्तिद्विरूपता॥१३॥जीवत्पितापिकुर्वीततर्पणंयमभीष्मयोः॥नरकायप्रदातव्यो
दीपःसंपूज्यदेवताः॥१४॥अत्रैवलक्ष्मीकामस्यविधिःस्नानेमयोच्यते॥इषेभूतेचदर्शेचकार्त्तिकेप्रथ

मेदिने॥१५॥यदास्वातीतदाभ्यंगस्नानंकुर्याद्विधूदये॥ऊर्ज्जेशुक्लद्वितीयायांतिथौचस्वातियुग्मगे॥१६॥मा-
नवोमंगलस्नायीनैवलक्ष्म्यावियुज्यते॥दीपैर्नीराजनादत्रसैषादीपावलिःस्मृता॥१७॥इंदुक्षयेपिसंक्रांतौ-
रवौपातेदिनक्षये॥अत्राभ्यंगोनदोषायप्रातःपापपनुत्तये॥१८॥माषपत्रस्यशाकेनभुक्त्वातस्मिन्दिनेनरः
॥प्रेताख्यायांचतुर्द्दश्यांसर्वपापैःप्रमुच्यते॥१९॥इषासितचतुर्दश्यामिंदुक्षयतिथावपि॥दर्शादौस्वातिसं-
युक्तेतदादीपावलिर्भवेत्॥२०॥कुर्यात्संलग्नमेतच्चदीपोत्सवदिनत्रयम्॥महाराजोबलिःप्रोक्तस्तुष्टेनह
रिणातथा॥२१॥वरंयाचस्वभद्रंतेयद्यन्मनसिवर्त्तते॥इतिविष्णुवचःश्रुत्वाबलिर्वचनमब्रवीत्॥२२॥आ
त्मार्थेकिंयाचनीयंसर्वंदत्तंमयातव॥लोकार्थेयाचयिष्यामिशक्तश्चेद्देहितन्मे॥२३॥मयाद्यतेधरादत्ता—
वामनच्छद्मरूपिणे॥त्रिभिःपदैस्त्रिदिवसैःसाचाक्रांतायतस्त्वया॥२४॥तस्मादेतद्बलेराज्यमस्तुघस्रत्रय
येहरे॥मद्राज्येयेदीपदानंभुविकुर्वंतिमानवाः॥२५॥तेषांगृहेनवस्त्रीयंसदातिष्ठतुसुस्थिरा॥ममराज्ये
गृहेयेषामंधकारःपतिष्यति॥२६॥लक्ष्मीसंतानांधकारःसदापततुतद्गृहे॥चतुर्दश्यांचयेदीपान्नरका-
यददंतिच॥२७॥तेषांपितृगणाःसर्वेनरकेनवसंतिच॥बलिराज्यंसमासाद्ययैर्नदीपावलिःकृता॥२८॥
तेषांगृहेकथंदीपाःप्रज्वलिष्यंतिकेशव॥बलिराज्येतुयेलोकाःशोकानुत्साहकारिणः॥२९॥तेषांगृहे
सदाशोकःपतंदितिनसंशयः॥चतुर्दशीत्रयेराज्यंबलेरस्त्वितियाचयेत्॥३०॥पुरावामनरूपेणप्रार्थ
यित्वाधरामिमाम्॥ददावतिथयेद्राद्यबलिंपातालवासिनम्॥३१॥कृत्वादैत्यपतेरित्थंहरिणातद्दिनत्र २१
यम्॥तस्मान्महोत्सवश्चात्रसर्वथैवहिकारयेत्॥३२॥महारात्रिःसमुत्पन्नाचतुर्दश्यांमुनीश्वराः॥अ

तस्तदुत्सवः कार्यः शक्तिपूजापरायणैः ॥ ३३॥ बलिराज्यं समासाद्य यक्षगंधर्वकिन्नराः॥ औषध्यश्चापि चान्याश्च मं-
त्राश्च मणयस्तथा॥ ३४॥ सर्व एव प्रहृष्यंति नृत्यंति च निशासु वै॥ तत्तन्मंत्राश्च सिध्यंति बलिराज्येन संशयः॥ ३५॥
बलिराज्यं समासाद्य यथा लोकाः प्रहर्षिताः ॥ तथा तद्दिनमध्ये तु लोकास्युर्हर्षिता भृशम्॥ ३६॥ तुलासंस्थे-
सहस्रांशौ प्रदोषे भूतदर्शयोः॥ उल्काहस्ता नराः कुर्युः पितृणां मार्गदर्शनम्॥ ३७॥ नरकस्थास्तु ये प्रेता-
स्तेषां मार्गेव्रतात्सदा॥ पश्यंत्येव न संदेहः कार्यं तन्मुनिपुंगवैः॥ ३८॥ आश्विने मासि भूतादि तिथयः कीर्त्ति
तास्त्रयः॥ दीपदानादिकार्येषु ग्राह्यास्ता मध्यान्ह कालिकाः॥ ३९॥ यदि स्युः संगवादर्वागेताश्च तिथयस्त्रयः॥
दीपदानादिकार्येषु कर्त्तव्याः पूर्वसंयुताः॥ ४०॥ इति सनत्कुमारसंहितायां कार्त्तिकमाहात्म्ये त्रयोदशोध्या
यः॥ ॥ वालखिल्या ऊचुः॥ ॥ एवं प्रभातसमये त्वमायां तु मुनीश्वराः॥ स्नात्वा देवान्पितॄन्भ-
क्त्या संपूज्याथ प्रणम्य च॥ १॥ कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः॥ दिवा तत्र न भोक्तव्यमृते बालातु
राज्जनात्॥ २॥ ततः प्रदोषसमये पूजयेदिंदिरां शुभां॥ कुर्यान्नानाविधैर्वस्त्रैः स्वच्छं लक्ष्म्याश्च मंडपम्
॥ ३॥ नानापुष्पैः पल्लवैश्च चित्रैश्चापि विचित्रितम्॥ तत्र संपूजयेल्लक्ष्मीं देवांश्चापि प्रपूजयेत्॥ ४॥ सं-
पूज्या देवनार्थोपि बहुभिश्चोपचारकैः॥ पादसंवाहनं कुर्याल्लक्ष्म्यादीनां तु भक्तितः॥ ५॥ अस्मिन्न-
हनि सर्वेपि विष्णुना मोचिताः पुरा॥ बलिकारागृहाद्देवा लक्ष्मीश्चापि विमोचिता॥ ६॥ लक्ष्म्या सार्द्धं
ततो देवा जग्मुः क्षीरोदधौ पुनः॥ प्रसुप्ता बहुकालं ते सुखं तस्मान्मुनीश्वराः॥ ७॥ रचनीयाः सूत्रग
र्भाः पर्यंकाश्च सुतूलिकाः॥ दुग्धफेनोपमैर्वस्त्रैः शस्ताश्च यथादिशम्॥ ८॥ स्थापयेत्तान्सुराल्लु-

क्ष्मीर्वेदघोषसमन्वितः॥ लक्ष्मीर्दैत्यभयान्मुक्तासुखसुप्तांबुजोदरे॥ ९॥ अतोत्रविधिवत्कार्यातुष्टैस्तु सुखसुप्तिका॥ तदन्हिपद्मशय्यायांयः पद्मासौख्यविवृद्धये॥ १०॥ कुर्यात्तस्य गृहंमुक्त्वा तत्सद्मात्क्कापिनव्रजेत्॥ नकुर्वन्तिनराइत्थंलक्ष्म्यायेसुखसुप्तिकाम्॥ ११॥ धनचिंताविहीनास्ते कथंरात्रौस्वपंतिहि॥ तस्मात्सर्वप्रयत्नेन लक्ष्मीसंपूजयेन्नरः॥ १२॥ सतुदारिद्र्यनिर्मुक्तः स्वजातौस्यात्प्रतिष्ठितः॥ जातीपत्रलवंगैलात्वक्कर्पूरसमन्वितम्॥ १३॥ पाचयित्वागव्यदुग्धंसितांदत्वायथोचिताम्॥ लड्डुकांस्तस्यकुर्वीत तांश्चलक्ष्म्यैसमर्पयेत्॥ १४॥ अन्यच्चतुर्विधंभक्ष्यंदेशकालादिसंभवम्॥ सर्वन्निवेदयेल्लक्ष्म्यै ममश्रीः प्रीयतामिति॥ १५॥ दीपदानंततःकुर्यात्प्रदोषेचतथोल्मुकम्॥ भ्रामयेत्स्वस्यशिरसिसर्वारिष्टनिवारणम्॥ १६॥ दीपवृक्षास्तथाकार्याः शक्त्यादेवगृहादिषु॥ चतुष्पथेस्मशानेचनदीपर्वतवेश्मसु॥ १७॥ वृक्षमूलेषुगोष्ठेषु चत्वरेषुगृहेषुच॥ वस्त्रैःपुष्पैःशोभितव्याराजमार्गस्यभूमयः॥ १८॥ गृहेषुस्थापयेन्नानापक्वान्नानिफलानिच॥ नागवल्लीदलादीनिरचयित्वाचनिक्षिपेत्॥ १९॥ शोभांकुर्याद्राजमार्गेकमलैश्चविशेषतः॥ तदभावेबरादीनांकृत्वातानिचशोभयेत्॥ २०॥ एवंपुरमलंकृत्यप्रदोषेतदनंतरम्॥ ब्राह्मणान्भोजयित्वादौसंभोज्यचबुभुक्षितान्॥ २१॥ लड्डुकापूपमंडाद्याः शष्कुलीपूरिकादिकाः॥ अलंकृतेनभोक्तव्यंनववस्त्रोपशोभिना॥ २२॥ ततोपराह्णसमये घोषयेन्नगरंनृपः॥ आद्यराज्यंबलेर्लोकायथेच्छंक्रीड्यतामिति॥ २३॥ यथेच्छंक्रीड्यतांबालाइत्याज्ञाप्यनृपेणतु॥ विलोक्यबालक्रीडांतांनानासामग्रिसंयुताम्॥ २४॥ तेभ्योदद्याच्क्रीडनकंततःपश्येच्छुभाशुभम्॥ तैश्चेत्सदीपितोवन्हिर्न

ज्वालांसुंचतयदा॥ २५॥ महामारीभयंघोरंदुर्भिक्ष्यंचाथजायते॥ बालरुष्टेराजशोकस्तेषांतुष्टेनृपेसु-
खम्॥ २६॥ बालयुद्धेराजयुद्धंरोदनेबालकैः कृते॥ अवश्यमेवभवतिवर्षाद्राज्यविनाशनम्॥ २७॥ य-
ष्टिकादिकृतानश्वान्यदारोहंतिबालकाः॥ तदाराज्ञोजयोवाच्यः परराष्ट्रविमर्दनम्॥ २८॥ यदाक्रीडंति
बालाश्चेल्लिंगंधृत्वाकरादिषु॥ तदाप्रसिद्धंनारीणांव्यभिचारः प्रजायते॥ २९॥ अन्नंयदागोपयंतिक्री
डनेबालकाजलम्॥ दुर्भिक्ष्यंवृष्ट्यभावश्चशीघ्रमेवप्रजायते॥ ३०॥ एवंबालकृतांचेष्टांबुध्वाचोत्पफ
लंवदेत्॥ लोकाश्चापिपुरेरम्येसुधाधवलिताजिरे॥ ३१॥ गीतवादित्रसंजुष्टेप्रज्वालितसुदीपके॥-
अन्योन्यप्रीतिसंयुक्तेदत्तलालनकेजने॥ ३२॥ तांबूलहृष्टहृदयेकुंकुमक्षोदचर्चिते॥ दुकूलपट्टव-
सनेपथ्यस्वर्णविभूषणे॥ ३३॥ मित्रस्वजनसंबंधीस्वगोत्रज्ञातिपूजिते॥ बलिराज्येप्रकर्त्तव्यंयद्य
न्मनसिवर्त्तते॥ ३४॥ जीवहिंसासुरापानंस्तेयंमार्तृसमागमः॥ हित्वातदन्यत्कर्त्तव्यंबलिराज्ये-
नदोषभाक्॥ ३५॥ आत्मनोयच्चसौख्यार्थेपरदुःखाकरंकृतम्॥ वारांगनादिगमनंस्पृष्टास्पृष्टादि
भक्षणम्॥ ३६॥ अन्यांबरधृतिश्चापिद्यूताद्यंचनदुष्यति॥ एवंतुसर्वदाकार्योबलिराज्यमहोत्सवः
॥ ३७॥ जीवहिंसासुरापानमगम्यागमनंतथा॥ चौर्यंविश्वासघातश्चपंचैतानिमुनीश्वराः॥ ३८॥ ब-
लिराज्येतुनरकद्वाण्युक्तानिसंत्यजेत्॥ ततोर्धरात्रसमयेस्वयंराजाव्रजेत्पुरम्॥ ३९॥ अवलोकयितुं
रम्यंपद्भ्यामेवशनैःशनैः॥ महतातूर्यघोषेणज्वलद्भिर्हस्तदीपकैः॥ ४०॥ हर्म्यशोभाकृतंयावत्कृतकैरम्य
कैर्नरैः॥ बलिराज्यप्रमोदंचदृष्ट्वास्वगृहमाव्रजेत्॥ ४१॥ एवंगतेनिशीथेचजनेनिद्रार्द्धलोचने॥ तावन्न

गस्नारीभिःशूर्पडिंडिमवादनैः॥ ५२॥ निष्काश्यतेप्रहृष्टाभिरलक्ष्मीःस्वगृहांगणात्॥ दंडैकरजनीयोगेदर्शः
स्यात्तुपरेऽहनि॥ ५३॥ तदाविहायपूर्वेद्युःपरेऽन्हिसुखरात्रिका॥ येवैष्णवावैष्णवाश्चबलिराज्योत्सवंन
राः॥ ५४॥ नकुर्वंतिवृथातेषांधर्माःस्युर्नात्रसंशयः॥ ५५॥ इतिसनत्कुमारसंहितायांकार्त्तिकमाहात्म्ये
चतुर्दशोऽध्यायः॥ ॥वालखिल्याऊचुः॥ ॥प्रतिपद्युभयेभ्यंगंकृत्वानीराजनंततः॥ सुवेषःसत्कथा
गीतेदानैश्चदिवसन्नयेत्॥ १॥ शंकरस्तुपराद्यूतंससर्जसुमनोहरम्॥ कार्त्तिकेशुक्लपक्षे,प्रथमेहनि
सत्यवत्॥ २॥ प्रत्युवाचवचश्चेदंदेवींप्रतिसदाशिवः॥ कालक्षेपायकेषांचित्केषांचिद्धतहेतवे॥ ३॥ के
षांचिद्धननाशायपश्यद्यूतंकृतंमया॥ तस्यत्वंकौतुकंपश्यभुवनंलापयाम्यहम्॥ ४॥ उक्त्वेत्थंक्रीडितं
ताभ्यांभवान्याचजितंतदा॥ पुनर्द्वितीयंभुवनंलापितंनिर्जितंतया॥ ५॥ पुनस्तृतीयंभुवनंलापितं-
निर्जितंतया॥ पुनर्वृषश्चसर्पपुनःपुनःपंनगबंधनम्॥ ६॥ शशिलेखाडमरुकमर्द्धांगंचाप्यजीजयत्॥
निर्गतस्तुहरोगेहाच्चीरवल्कलधारकः॥ ७॥ गंगातीरेसमागत्यतस्थौचिंतासमन्वितः॥ तस्मिन्क्षणे
कार्त्तिकेयःखेलितुंचगतःक्वचित्॥ ८॥ गंगातीराद्ययौगेहमपश्यत्सपितृशंकरम्॥ ईषत्क्रोधंविरक्तंच
ननामचरणौपितुः॥ ९॥ तेनापिमूर्ध्निचाघ्रातःपुत्रयाहिगृहेसुखम्॥ तवमात्राजितश्चाहंगच्छामि
गहनंवनम्॥ १०॥ ॥स्कंदउवाच॥ ॥कथंमात्राजितोदेवोवनंकस्माच्चगच्छति॥ अहमप्यागमि
ष्यामित्वत्सार्द्धंसेवयाम्यहम्॥ ११॥ ॥शिवउवाच॥ ॥विजित्यतवमात्रातुक्षणंनस्थेयमत्रतु॥ म ३३
मत्वोकेतथेत्युक्त्वाक्वचिद्गच्छाम्यहंततः॥ १२॥ ॥स्कंदउवाच॥ ॥मागच्छत्वंमहादेवद्यूतमार्गःप्रद-

र्ययताम्॥ आनीयतेमयाजित्वातवसर्वंधनादिकम्॥ १३॥ शिवेनाथ तथेत्युक्ता द्यूतमार्गःप्रदर्शितः॥ स्कंदोपिगृ
हमागत्यपार्वतींवाक्यमब्रवीत्॥ १४॥ ॥स्कंदउवाच॥ ॥देविदेवोगतः क्वासौवृषभोनैवसंस्थितः॥ तवकेच
विधुःकस्मान्मातःसत्यंवदस्वनः॥ १५॥ ॥देव्युवाच॥ ॥स्वयमेवकृतंद्यूतंस्वयमेवा पराजितः॥ स्वयमेवग
तःक्रोधात्सार्थ्यते सम्याकथम्॥ १६॥ ॥स्कंदउवाच॥ ॥मयासहक्रीडितव्यंकथंतत्क्रीडनंत्विति॥ देव्यु
क्रीडत्तेनसार्द्धंततःस्कंदेननिर्जितम्॥ १७॥ मयूरेणवृषस्तस्याःशक्त्यापन्नगबंधनम्॥ वृषेणेंदुस्ततोर्धांगं
स्वंसर्वस्वेननिर्जितम्॥ १८॥ कौपीनेनार्जितंचैवसंगृहीत्वातदुपाययौ॥ गंगातीरेयत्रशिवस्तत्रागत्यन्यवेद
यत्॥ १९॥ ततोदेवीसमीपेतुविघ्नराजःसमाययौ॥ किमर्थंम्लानवदनादेवीजातासितद्वद॥ २०॥ ॥देव्यु
वाच॥ ॥मयाजितोमहादेवः सतुगेहाद्विनिर्गतः॥ आयास्यतिवृषाद्यर्थमितिनिश्चित्यसंस्थितम्॥ २१॥
तवभ्रातातुतज्जित्वासर्वमस्मैनिवेदितम्॥ नायास्यत्यधुनादेवइतिचिंतापरास्म्यहम्॥ २२॥ ॥गणेश
उवाच॥ ॥देविशिक्षयमेद्यूतंजेष्यामिभ्रातरंह रम्॥ आनयिष्यामिसामग्रींयद्यहंस्यांकृतस्तव॥ २३॥
इतिपुत्रवचःश्रुत्वातस्मैद्यूतमशिक्षयत्॥ संगृहीत्वापाशयुग्मंसारिकाश्चीघ्रमाययौ॥ २४॥ पृष्टापृष्टायत्रदेवः
स्कंदोयत्रव्यवस्थितः॥ ॥गणेशउवाच॥ ॥मयानीताविमौपाशौसारिकानाद्यमेवच॥ २५॥ संक्रीडितुंम
यासार्द्धंदेवस्याग्रेममाग्रज॥ इतिभ्रातुर्वचःश्रुत्वाउभाभ्यांक्रीडितंतदा॥ २६॥ मूषकेणबलीवर्दोमयूरंचा
प्यजीजयत्॥ शिवस्यसर्वविषयंस्कंदस्यचतथैवच॥ २७॥ गृहीत्वासतुविघ्नेशस्तत्कालंपार्वतींययौ॥ पा
र्वत्यपिचसंतुष्टागणेशंवाक्यमब्रवीत्॥ २८॥ ॥पार्वत्युवाच॥ ॥सम्यक्कृतंत्वयाभद्रनानीतोसौमहेश्वरः॥

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



सामदानादिकंकृत्वाआनयात्रमहेश्वरम्॥ २९॥ तथेत्युक्त्वागणेशोसौसमारुह्यचमूषकम्॥ अतित्वरितआ-
यातोगृहंनेतुंमहेश्वरम्॥ ३०॥ ईश्वरस्ततउत्थायहरिद्वारंसमागतः॥ नारदेरितवृत्तांतोविष्णुस्तत्रसमाग
तः॥ ३१॥ ॥विष्णुरुवाच॥ ॥त्र्यक्षविद्यांकुरुशिवएकाक्षोहंभवाम्यहम्॥ रावणेनतथेत्युक्तंकाणोभव
जनार्दन॥ ३२॥ ॥विष्णुरुवाच॥ ॥ओतुर्वत्सइयसेमांत्वंतस्मादोतुर्भविष्यसि॥ ॥नारदउवाच॥ ॥देव
सिद्धंमहाकार्यमायातिसगणेश्वरः॥ ३३॥ भववृत्तांतंज्ञातुंचमूषकस्तस्यधर्ष्यताम्॥ इतिश्रुत्वानारदस्य-
वचनंरावणोगतः॥ ३४॥ कुर्वन्मार्जारवच्छब्दंमूषकोसौपलायितः॥ मूषकंत्यज्यगणपःशनैःशनैरुपाय
यौ॥ ३५॥ जातोविष्णुःपाशाद्दूरतस्तेनलोकितम्॥ प्रणिपत्यमहादेवंविनम्रनतकंधरः॥ ३६॥ ॥ग
णेशउवाच॥ ॥आगम्यतांदेवगेहंदेवीमानपुरःसरम्॥ यदिनायासिगेहेत्वंप्राणांस्त्यजतिचांबिका॥ ३७
॥त्वय्यागतेमयासर्वंकार्यमेतदुपायनम्॥ ॥शिवउवाच॥ ॥एषात्र्यक्षामयाविद्याधुनागणपनिर्मिता
॥ ३८॥ अनयाक्रीडतेदेवीआगमिष्येगृहंतदा॥ ॥गणेशउवाच॥ ॥सर्वथैवक्रीडितव्यंदेव्यानास्त्यत्रसंशयः
॥ ३९॥ आगम्यतांगृहेदेवत्वतरायाहिमाव्रज॥ इतितस्यवचःश्रुत्वाईश्वरःसगणोययौ॥ ४०॥ नारदोपिगत
स्तत्रमहोत्सुरपिचागतः॥ उपविष्टस्ततःकैलासेदेवीतत्रसमागता॥ ४१॥ दृष्ट्वादेवींप्रणम्यादौमहेशोवाक्यमब्रवी
त्॥ त्र्यक्षाविद्यामयादेविगंगाद्वारेविनिर्मिता॥ ४२॥ अनयाजयसेत्वंचेत्तदात्वंसत्यभाषिणी॥ ॥देव्युवा-
च॥ ॥दृष्ट्वाधातवसामग्रीमयेयंपालिताशिव॥ ४३॥ त्वयाकिंलाप्यतेदेवदर्शयस्वसमाग्रतः॥ इतिश्रुत्वाव २५
चस्तस्याःप्रैक्षतःधोसुरवंहरः॥ ४४॥ तस्मिन्क्षणेनारदेनस्वकौपीनंसमर्पितम्॥ वीणादंडश्चोपवीतमनेनक्रीड्य

तामिति ॥ ४५ ॥ सदाशिवः प्रसन्नोभूत्क्रीडनंसहचक्रतुः ॥ यद्यद्याचयतेरुद्रस्तथाविष्णुःप्रजायते ॥ ४६ ॥ यद्य-
द्याचयतेदेवीविपरीतस्तदापतत् ॥ स्वकीयाभरणाद्यंचमहादेवेननिर्जितम् ॥ ४७ ॥ सकंदालंकारिकंसर्वंपुन
रात्तंहरेणच ॥ ततोगणेशःप्रोवाचवाक्यंसदसिचागतः ॥ ४८ ॥ नक्रीडितव्यंहेमातःपार्श्वोलक्ष्मीपतिःस्वयम् ॥
कृतोहरेणसर्वंस्वंतेहरिष्यतिमस्मिता ॥ ४९ ॥ इतिपुत्रवचःश्रुत्वापार्वतीक्रोधसंयुता ॥ तथाविधांतामालोक्य-
रावणोवाक्यमब्रवीत् ॥ ५० ॥ ॥ रावणउवाच ॥ ॥ पापिष्ठेनाद्यत्राप्तोस्मिदुर्दुरूढेनविष्णुना ॥ अधर्मोयंनकर्त्त-
व्यइत्युक्तंनमयाततः ॥ ५१ ॥ ॥ देव्युवाच ॥ ॥ सर्वान्छपिष्येक्स्माहंधूर्त्तानेतान्महाबलान् ॥ सामर्थ्यंपश्यमेपु
अधर्मत्यागफलंतथा ॥ ५२ ॥ देवयस्माद्वलयाकपटंचकृतंत्वया ॥ तस्मात्सदास्कंधेमूर्धाबलाभारप्रपीडितः ॥
५३ ॥ यतःस्त्वतःकुचेष्टात्वंयतःशिक्षयसेसुने ॥ स्वप्नेचापिसुखंस्त्रीणांनकदाचिद्भविष्यति ॥ ५४ ॥ यतःकृता
चाबलयासहमायात्वयाहरे ॥ एषोवैरीरावणोयंतवभार्यांनयिष्यति ॥ ५५ ॥ हित्वामांमातरंपुत्रबालक
त्वंत्वयाकृतम् ॥ अतस्त्वंनयुवावृद्धोबालएवभविष्यसि ॥ ५६ ॥ ॥ गणेशउवाच ॥ ॥ अनेनचोतुरूपेण
मूषकोयंपलायितः ॥ मध्येमार्गंकृतोविघ्नःशपैनंराक्षसाधमम् ॥ ५७ ॥ ॥ देव्युवाच ॥ ॥ यस्माद्विघ्नः
कृतोदुष्टत्वयामेबालकस्यतु ॥ तस्मादयंतवरिपुर्विष्णुस्त्वांघातयिष्यति ॥ ५८ ॥ इतिदेव्यावचःश्रुत्वासर्वेसं
क्रुद्धमानसाः ॥ देवीशापेमनश्चक्रुर्नारदोवाक्यमब्रवीत् ॥ ५९ ॥ कोपंकुर्वंतुमादेवानेयंशाप्याकदाचन ॥
सर्वेषामादिमायेयंयथायोग्यफलप्रदा ॥ ६० ॥ नायंशापअसावाशीःस्मर्त्तव्यासुविचक्षणैः ॥ गंगासदा
तिष्ठतुरुद्रमस्तकेवलाद्धमावैनयतुक्षपाचरः ॥ ६१ ॥ जायाहरस्यापियथोचितामृतिश्चानंगत्वयाशिह-

तःकुमारः॥६२॥अहंत्वमामिधरणींनस्थातव्यंकदाचन॥सम्यक्प्रोक्तंत्वयादेविश्टृणिदानींवचोमम॥६३॥स
र्वक्रोधापनुत्यर्थंननर्त्तमुनिपुंगवः॥कक्षादानंचकारोच्चैर्हाहाहाहीतिचाब्रवीत्॥६४॥तस्यचेष्टांविलोक्या
थसर्वेहर्षमवाप्नुयुः॥ ॥देव्युवाच॥ ॥भोभोविदूषकश्रेष्ठकृतकृत्योसिनारद॥६५॥वरंवरयभद्रंतेयत्तेम
नसिवर्त्तते॥ ॥नारदउवाच॥ ॥याचयंतुवरंसर्वेकिंवाकिंयाचयिष्यथ॥६६॥सर्वेतेयाचयिष्यामियथा
श्रेष्ठंब्रुवंतुतान्॥॥शिवउवाच॥ ॥सर्वंसंक्षम्यतांदेविजितंयद्वृषभादिकम्॥६७॥तन्ममास्तुद्यूतवार्तैर्न
ग्राह्यंजगदंबिके॥ ॥देव्युवाच॥ ॥मास्तुत्वयासमंनाथस्वप्नेपिममचांतरम्॥६८॥एतदेवपरंमन्येमाभू
त्क्रोधोममोपरि॥कार्त्तिकेशुक्लपक्षेतुप्रथमेहनिसत्यवत्॥६९॥जयोलब्धोमयात्वत्तःसत्येनैवमहेश्वर॥
तस्माद्यूतंप्रकर्त्तव्यंप्रभातेत्रैवमानवैः॥७०॥तस्माद्यूतेजयोयस्यतस्यसंवत्सरंजयः॥ ॥विष्णुरुवाच॥ ॥
७१॥अहंयंयंत्करिष्यामिश्रेष्ठंबालघुमेवच॥तथातथासभवतुवरमेनंवदाम्यहम्॥७२॥ ॥स्कंदउवाच॥
सदामनस्तपस्यायांममतिष्ठतुदेवताः॥कदापिविषयेमास्तुदेयएषोवरोमम॥७३॥ ॥गणेशउवाच॥संसारेयानिका
र्याणितदादौममपूजनात्॥यांतुसिद्धिंममकृपांविनासिध्यंतुमाक्वचित्॥७४॥ ॥रावणउवाच॥ ॥वेदव्याख्यानसाम
र्थ्यंममशीघ्रंभवत्विति॥सदाशिवेसदाचास्तुभक्तिर्मेव्यभिचारिणी॥७५॥ ॥नारदउवाच॥ ॥कुद्दाकुद्दाश्चयेके
चिन्मूर्खामूर्खाश्चयेजनाः॥मद्वाक्यंसत्यमित्येवमानयंतुसदासुराः॥७६॥इत्युक्त्वांतर्हिताःसर्वेदेवारुद्रपुरोगमाः
॥तस्मात्प्रतिपदाद्यूतंकुर्यात्सर्वोपिवैजनः॥७७॥द्यूतंनिषिद्धंसर्वत्रहित्वाप्रतिपदंबुधाः॥स्वस्योद्यमादिज्ञानायकु २५
र्याद्यूतमतंद्रितः॥७८॥विशेषवच्चभोक्तव्यंप्रशस्तेब्राह्मणैःसह॥दयिताभिश्चसहितैर्नेयासा च निशाभवेत्॥७९॥

॥ततःसंपूजयेन्मानै रंतःपुरनिवासिनीः॥ पदातिजनसंघातान्ग्रैवेयैः कटकैःशुभैः॥८०॥ स्वनामकैःस्वयंराजातो
षयेत्स्वजनान्पृथक्॥ वृषभान्महिषांश्चैवयुध्यमानान्परैःसह॥८१॥ गजानश्वांश्चयोधांश्चपदातीन्समलं
कृतान्॥ मंचारूढःस्वयंपश्येन्नटनर्तकचारणान्॥८२॥ योधयेच्चासयेच्चैवगोमहिष्यादिकंतथा॥ ततोप
राह्णसमयेपूर्वस्यांदिशिकाश्यप॥८३॥ मार्गपालींप्रबध्नीयात्तुंगेस्तंभेथपादपे॥ कुशकाशमयींदिव्यांलंबकै
र्बहुभिर्नृपः॥८४॥ दर्शयित्वागजानश्वान्सायमस्यास्तलंनयेत्॥ कृतहोमैर्द्विजैःसम्यग्बध्नीयान्मार्गपा-
लिकाम्॥८५॥ मार्गपालिनमस्तेस्तु सर्वलोकसुखप्रदे॥ मार्गपालींसमुल्लंघ्यनीरुजःस्युःसुखान्विताः॥
८६॥ तस्मादेतत्सकर्त्तव्यं द्यूताद्यंविधिपूर्वकम्॥८७॥ इतिसनत्कुमारसंहितायांकार्त्तिकमाहात्म्येद्यूतविधि
र्नामपंचदशोऽध्यायः॥ ॥पूर्वविद्धाप्रकर्त्तव्याप्रतिपद्बलिपूजने॥ वर्धमानतिथिर्नंदायदासार्द्धत्रिया
मिका॥१॥ द्वितीयावृद्धिगामिश्राकुहूस्तत्रनचोच्यते॥ बलिमालिख्यदैत्येंद्रंवर्णकैःपंचरंगकैः॥२॥ गृह-
स्यमध्यशालायांविंध्यावल्यासहान्वितम्॥ जिह्वाताल्वक्षिणीप्रांतेकरयोःपादयोस्तले॥३॥ रक्तवर्णे-
नास्यकेशाःकृष्णेनैवसमालिखेत्॥ सर्वांगंपीतवर्णेनशस्त्राद्यंनीलवर्णतः॥४॥ वस्त्राद्यंश्वेतवर्णेनयथा
शोभंप्रकल्पयेत्॥ सर्वाभरणशोभाढ्यंद्विभुजंनृपचिन्हितम्॥५॥ लोकोलिखेद्गृहस्यांतःशय्यायांशु
क्लतंदुलैः॥ मंत्रेणानेनसंपूज्यषोडशैरुपचारकैः॥६॥ बलिराजनमस्तुभ्यंदैत्यदानवपूजित॥ इंद्रश-
त्रोमरारातेविष्णुसांनिध्यदोभव॥७॥ बलिमुद्दिश्ययदीयंतेदानानिमुनिपुंगवाः॥ यानितान्यक्षयाणि
स्युर्मयैतत्संप्रदर्शितम्॥८॥ कौमुदीतिकरयस्मादीयंतेस्यांयुधिष्ठिर॥ पार्थिवेंद्रैर्मुनिवरास्तेनेयंकौ

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



सुदीस्मृता॥९॥योयादृशेनभावेनतिष्ठत्यस्यांयुधिष्ठिर॥हर्षदैन्यादिरूपेणवर्षंतस्यप्रयातिहि॥१०॥बलिपूजां
विधायैवंपश्चाद्गोक्रीडनंचरेत्॥गवांक्रीडादिनेयत्ररात्रौदृश्येतचंद्रमाः॥११॥सोमोराजापशून्हंतिसुरभीपू
जकांस्तथा॥प्रतिपद्दर्शसंयोगेक्रीडनंतुगवांमतम्॥१२॥परविद्धासुयःकुर्यात्पुत्रदारधनक्षयः॥अलं-
कार्यास्तदागावोगोग्रासादिभिरर्चिताः॥१३॥गीतवादित्रनिर्घोषैर्नयेन्नगरबाह्यतः॥आनीयचततःपश्चा
कुर्यान्नीराजनाविधिम्॥१४॥अथचेत्सतिपत्स्वल्पानारीनीराजनंचरेत्॥द्वितीयायांततःकुर्यात्सायंमंग
लमालिकाः॥१५॥एवंनीराजनंकृत्वासर्वपापैःप्रमुच्यते॥प्रतिपत्पूर्वविद्धैवयष्टिकाकर्षणेभवेत्॥१६॥कु
शकाशमयींकुर्याद्यष्टिकांसुदृढांनवाम्॥देवद्वारेनृपद्वारेथवानेयाचतुष्पथे॥१७॥तामेकतोराजपुत्राहीनव
र्णास्तथैकतः॥गृहीत्वाकर्षयेयुस्तेयथासारंमुहुर्मुहुः॥१८॥समसंख्याद्वयोःकार्याःसर्वेपिबलवत्तराः॥जयो
त्रहीनजातीनांजयोराज्ञस्तुवत्सरम्॥१९॥उभयोःपृष्ठतःकार्यारेखासाकर्षकोपरि॥रेखांतेयोनयेत्तस्यजयो
भवतिनान्यथा॥२०॥जयचिन्हमिदंराजाविदधीतप्रयत्नतः॥२१॥इतिसनत्कुमारसंहितायांकार्त्तिकमाहा
त्म्येषोडशो॰ध्यायः॥ ॥वालखिल्याऊचुः॥ ॥कार्त्तिकस्यसितेपक्षेअन्नकूटंसमाचरेत्॥गोवर्धनोत्सव
स्तत्रश्रीविष्णुःप्रीयतामिति॥१॥ ॥ऋषयऊचुः॥ ॥कोसौगोवर्द्धनोदेवःकस्मात्तंपरिपूजयेत्॥कस्मात्तदुत्स
वःकार्यःकृतेकिंचफलंभवेत्॥२॥ ॥वालखिल्याऊचुः॥ ॥एकदाभगवान्कृष्णोगतोगोपालकैःसह॥गृही
त्वागाःप्रतिपदिकार्त्तिकस्यगतोवने॥३॥तत्रनानाविधालोकागोप्यश्चापिसहस्रशः॥गोवर्धनंसमीपेतु
कुर्वंत्युत्सवमादरात्॥४॥खाद्यंलेह्यंचचोष्यंचपेयंनानाविधंकृतम्॥कृत्वानगस्तथान्नानांनृत्यंतिचप

रेजनाः ॥५॥ नानापताकाः संगृह्य केचिद्धावंति चाग्रतः ॥ केचिद्गोपाः प्रनृत्यंति स्तुवंति च तथा परे ॥६॥ इतस्ततो वि
तानानि तोरणानि सहस्रशः ॥ दृष्ट्वैवं कौतुकं कृष्णो वाक्यमेतदुवाच ह ॥७॥ ॥कृष्ण उवाच॥ ॥उत्सवः क्रियते क
स्य देवताका च पूज्यते ॥ पक्वान्नं खादनार्थाय कल्पितो चोत्सवोय वा ॥८॥ न भक्षयंति ये देवास्तेभ्योन्नं तु प्रदी
यते ॥ प्रत्यक्षभोजिनो देवास्तेभ्योन्नं तु न दीयते ॥९॥ दृष्ट्वेदृशीभाववुद्धिं गोपाला वेधसा कृताः ॥ ॥गोपाला ऊ
चुः ॥ ॥एवं मा वद कृष्ण त्वं दृष्ट्वेन हंतुर्महोत्सवः ॥१०॥ वार्षिकः क्रियते स्माभिर्देवेंद्रस्य तु तुष्टये ॥ इंद्रं पूजय भद्रं ते भ
विष्यति न संशयः ॥११॥ यः करोति च देवेंद्र महोत्सवमिमं वरम् ॥ दुर्भिक्षं च तथावृष्टिर्देशे तस्य न जायते ॥१२॥
तस्मात्त्वमपि कृष्णात्र कुरूत्सवमनेकधा ॥ ॥श्रीकृष्ण उवाच॥ ॥अयं गोवर्धनः साक्षाद्दृष्टिसौभाग्यकारकः ॥
१३॥ मथुरास्थैर्व्रजस्थैश्च सर्वथायं प्रयत्नतः ॥ हित्वैनं पूजितं लोका हृथेंद्रः पूज्यते कथम् ॥१४॥ उत्सवः क्रि
यतामस्य प्रत्यक्षोयं भुनक्ति च ॥ करिष्यति कृपिं सम्यक् उपसर्गान्हनिष्यति ॥१५॥ यदा यदा संकटं मे महदा
गत्य जायते ॥ तदा तदा पूजयामि ह्रस्वयं गोवर्द्धनं गिरिम् ॥१६॥ श्रवणे श्रवणे गोपा वार्ताः कुर्वंति किंचिदस्
तेषां मध्ये केश्चिदुक्तं कृष्णोक्तं क्रियतामिति ॥१७॥ यदाश्नाति चान्नं वै नगो गोवर्द्धनस्तदा ॥ तदा कृष्णोक्तमखिलं
सत्यमेव भविष्यति ॥१८॥ सर्व एव तदा गोपा विनिश्चित्य च नंदनम् ॥ वचनं प्राहुरित्थं चेन्निश्चयोस्ति तथा कुरु
॥१९॥ सर्वेषामग्रणीर्भूत्वा गोवर्द्धनमहोत्सवम् ॥ ततः कृष्णस्तथेत्युक्त्वा स्वोत्सवे कृतनिश्चयः ॥२०॥ नानासाम-
ग्रिकं चक्रुर्यथोक्तं नंदसूनुना ॥ नानावस्त्राणि पात्राणि चास्तृतानि नगाग्रतः ॥२१॥ तत्र दत्तान्नपुंजस्तु यथा गो
वर्धनो महान् ॥ भक्ताः सूपा निशाकाश्च कांजिकं वटकास्तथा ॥२२॥ पूरिकाद्यं च लड्डुकाः शष्कुल्यो मंडकादिकं ॥

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



दुग्धंदधिघृतंक्षौद्रंलेह्यंचोष्यंतथामिषम्॥२३॥कथिकाद्यंसर्वमपितत्रदत्वावचोब्रवीत्॥ ॥श्रीकृष्णउवाच॥ ॥मंत्रं
पठित्वागोपालानेत्रेसंमीलयंतुच॥२४॥गोवर्द्धनेनभोक्तव्यंसर्वमन्नंनसंशयः॥ ॥श्रीकृष्णउवाच॥ ॥गोवर्धनध
राधारगोकुलत्राणकारक॥२५॥बहुबाहुकृतच्छायगवांकोटिप्रदोभव॥लक्ष्मीर्यालोकपालानांधेनुरूपेणसंस्थि
ता॥२६॥घृतंवहतियज्ञार्थेममपापंव्यपोहतु॥पठित्वेवंमंत्रयुगंसर्वेमुद्रितलोचनाः॥२७॥कृष्णोगोवर्धनंविश्य
सर्वमन्नमभक्षयत्॥भक्षणावसरेकैश्चिद्दृष्टैर्दृष्टोगिरिस्तथा॥२८॥अतीवाभूत्तदाश्चर्यंतच्चेतसिमुनीश्वरः
ततोनाडीद्वयात्कृष्णोगोपान्वाक्यमुवाचसः॥२९॥अहोगोवर्धनेनात्रक्षणात्भुक्तमिहस्फुटम्॥पश्यंतुस
र्वेगोपालाःप्रत्यक्षोयंनसंशयः॥३०॥यद्यस्तिसुखवांछावःकुर्वंत्येतन्महोत्सवम्॥इतिश्रुत्वावचस्तस्यस
र्वेविस्मितमानसाः॥३१॥गोवर्धनोत्सवंचक्रुरैंद्राच्छतगुणंतदा॥इंद्रोत्सवंद्रष्टुकामःसमागच्छत्सनारदः
गोवर्द्धनोत्सवंदृष्ट्वादेवेंद्रस्यसभांययौ॥३२॥देवेंद्रेणकृतातिथ्योवारंवारंप्रणोदितः॥नोवाचवचनंकिंचिद्दे
वेंद्रःप्रत्यभाषत॥३३॥ ॥इंद्रउवाच॥ ॥शुभाकंकुशलंविप्रवर्ततेवानवेतिवा॥मदग्रेकथ्यतांदुःखंमुनी-
श्वरहराम्यहम्॥३४॥ ॥नारदउवाच॥ ॥अस्माकंकिंमुनींद्राणामिंद्रदुःखस्यकारणम्॥परंगोवर्धनःशैल
इंद्रोजातोविलोकितः॥३५॥त्वदुत्सवेपूज्यतेसौगोपालैर्गोकुलेहरे॥अतःपरंयज्ञभागान्नरहिष्यतिसएवहि
॥३६॥इंद्रासनंतथेंद्राणींक्रमात्सैवग्रहिष्यति॥यस्यवीर्यंचसर्वत्रतस्यराज्यंप्रजायते॥३७॥किमस्माकं-
मुनींद्राणांयएवेंद्रासनंवसेत्॥वर्षाद्वामासषट्काद्वाद्रष्टव्योसौसमागतः॥३८॥इत्थमुक्त्वैवदेवेंद्रंप्रययौ २७
नारदोभुवि॥इत्थंनारदवाक्यंसश्रुत्वाशक्रोभ्यभाषत॥३९॥अहोआवर्तसंवर्तद्रोणनीलकपुष्कराः॥सर्वेमे

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

घाजलंगर्त्यकरकाभिःसमन्विताः॥४०॥प्रयांतुगोकुलंशीघ्रंमारयंतुचबल्लवान्॥गोवर्द्धनंस्फोटयंतुवज्रपातैरनेकशः॥४१
घातयंतुचगाश्चापिगृहाण्युच्चाटयंतुच॥ततोघनघटाघोषोगोकुलेभून्मुनीश्वराः॥४२॥जातोरात्र्यंधकारोथमध्यान्हस
मयेतदा॥कंपिताबल्लवाःसर्वेकिमकांडेत्युपस्थितम्॥४३॥ववर्षुर्बहुपानीयंकरकाभिस्तदाघनाः॥ ॥गोपालाऊचुः
॥ ॥हाकृष्णकृष्णहेकृष्णकिमिदानींविधीयताम्॥४४॥मृतास्मबल्लवाःसर्वेकुपितोयंहिवासवः॥ ॥श्रीकृष्णउवाच॥
निमील्याक्षीणिभोगोपाध्येयोगोवर्द्धनोनगः॥४५॥रक्षाकर्त्तासएवास्तिनान्योस्तिजगतीतले॥इत्युक्तोत्पाट्यतंशैलं
तत्तलेस्थापितास्तुते॥४६॥ततःप्रोवाचवचनंगोपान्प्रतिबलानुजः॥ ॥श्रीकृष्णउवाच॥ ॥अहोगोवर्द्धनेनैतत्स्थ
लंदत्तंव्रजेव्रजाः॥४७॥अन्यःकोस्तिस्थलंदातुंप्रत्यक्षोयंनगोत्तमः॥एवंसप्तदिनंतोयंवृष्टंमुसलधारया॥४८॥-
नानादेशाययुर्नाशंनगोपाःशरणंययुः॥गोवर्धनस्यनाम्नैवकृष्णोनित्यंप्रयच्छति॥४९॥पक्कान्नानिचगोपेभ्यस्त
त्रतेसुखमावसन्॥इत्येवकुतुकंदृष्ट्वासत्यलोकंययौमुनिः॥५०॥ब्रह्मन्किंत्वंप्रस्फ्रमोसिजायतेवृष्टिनाशनम्॥त-
स्माच्छीघ्रंगोकुलेत्वंगत्वावृष्टिंनिवारय॥५१॥ ॥ब्रह्मोवाच॥ ॥किमर्थंजायतेवृष्टिःकथंवृष्टिविनाशनम्॥क-
श्चदैत्यःसमुत्पन्नःसर्वमाख्याहिमेमुने॥५२॥ ॥नारदउवाच॥ ॥नोत्पन्नोदैत्यराट्कश्चित्सक्तःशक्रोत्सवो
भुवि॥यादवैरितिसंक्रुद्धइंद्रएवंप्रवर्षति॥५३॥इतितस्यवचःश्रुत्वाहंसमारुह्यविश्वसृट्॥आगतोयत्रशक्रो
स्तिक्रोधादेवंप्रवर्षति॥५४॥ ॥ब्रह्मोवाच॥ ॥कथंव्यवसिताबुद्धिरीदृशीतेसुरेश्वर॥त्रैलोक्यनाथोभगवान्नि
र्जेतव्यःकथंत्वया॥५५॥एकेनैवकरांगुल्यापश्यगोवर्धनोधृतः॥ईर्ष्यातेनकथंसाकंत्वयाशक्रविधीयते॥
५६॥इतिब्रह्मवचःश्रुत्वामेघान्संस्तभ्यवासवः॥प्रणिपत्यचतंकृष्णंशक्रोवचनमब्रवीत्॥५७॥क्षंतव्या

मत्कृतिर्विष्णोर्दासोहंशरणंगतः॥ यद्योचनेतन्मदेयमपराधापनुत्तये॥ ५८॥ ॥श्रीकृष्णउवाच॥ ॥अज्ञानात्तवसा
मर्थ्येगोपालैरचितंत्विदम्॥ एषांदंडस्तुयोग्योयंसम्यगेवत्वयाकृतम्॥ ५९॥ अहंकनीयांस्तेभ्राता तवाज्ञापरि
पालकः॥ शरणागतजातीनांरक्षणंतुमयाकृतम्॥ ६०॥ यदिप्रसन्नोदेवेशउत्सवोयंप्रदीयताम्॥ गोवर्ध-
नायगिरयेगोकुलंरक्षितंयतः॥ ६१॥ शक्रोपिचतथेत्युक्त्वा तत्रैवांतरधीयत॥ गतेशक्रेगिरींद्रंतंसंस्थाप्यहरिर
ब्रवीत्॥ ६२॥ ॥श्रीकृष्णउवाच॥ ॥गोपादृष्टंतुमहात्म्यमद्भुतंशैलजंतुयत्॥ अद्यारभ्यप्रकर्त्तव्योमहान्गो
वर्द्धनोत्सवः॥ ६३॥ गोवर्द्धनेनशैलेननिखिलातुधराधृता॥ एतत्सारमजानद्भिः कथंसंक्रीडितंपुरा॥ ६४
अद्यपर्वतराजस्त्वसर्वंब्रूतेममाग्रतः॥ एतत्सेवाप्रभावेनबलंलब्धंमयामहत्॥ ६५॥ प्रतिसंवत्सरंतस्मादन्न
कूटंविधीयताम्॥ गवांभवतिकल्याणंपुत्रपौत्रादिसंततिः॥ ६६॥ ऐश्वर्यंचसदासौख्यंभवेद्गोवर्द्धनोत्स
वात्॥ कृतंयत्कार्त्तिकस्नानंजपहोमार्चनादिकम्॥ ६७॥ सर्वंनिष्फलतामेतिनकृतेपर्वतोत्सवे॥ एवमु-
क्तास्तुतेगोपाःसर्वेसत्यममन्यत॥ ६८॥ ययुःकृष्णादयःसर्वेनवमेहनिगोकुलम्॥ ॥वालखिल्याऊचुः
॥ ॥इत्येतत्सर्वमाख्यातमस्माभिस्तुमुनीश्वराः॥ ६९॥ श्रीकृष्णस्यतुसंतुष्ट्यैत्वन्नकूटंविधीयतां॥ नाना
प्रकारशाकानिदेशकालोद्भवानिच॥ ७०॥ पक्वान्नानिविचित्राणिकुर्याच्छक्त्यनुसारतः॥ सर्वान्नपर्वतं
कुर्याछ्रीकृष्णायनिवेदयेत्॥ ७१॥ गोवर्द्धनस्वरूपायमंत्रोकृष्णोदितोपठन्॥ एवंयःकुरुतेलोकेविष्णु
लोकेमहीयते॥ ७२॥ इतिसनत्कुमारसंहितायांकार्त्तिकमाहात्म्येसप्तदशोऽध्यायः॥ ॥वालखिल्या 
ऊचुः॥ ॥कार्तिकस्यसितेपक्षेद्वितीयायमसंज्ञिता॥ तत्रापराह्णेकर्त्तव्यंसर्वथैवयमार्चनम्॥ १॥ प्रत्यहं

यमुनागत्ययमंसंप्रार्थयेत्सुरा॥ भ्रातर्ममगृहेयाहि भोजनार्थंगणावृतः॥ २॥ अद्यश्वोवापरश्वोवाप्रत्यहंवदतेयमः॥ का
र्यव्याकुलचित्तानामवकाशोनजायते॥ ३॥ तदैकदायमुनयाबलात्कारान्निमंत्रितः॥ सगतःकार्त्तिकेमासिद्वितीयायांमुनीश्वराः॥ ४॥ नारकीयजनान्मुक्त्वागणैःसहस्वैःस्रुतः॥ कृतातिथ्योयमुनयानानापाकाःकृताःस्वग॥ ५॥
कृताभ्यंगोयमुनयातैलैर्गंधमनोहरैः॥ उद्वर्तनंलापयित्वास्नापितःसूर्यनंदनः॥ ६॥ ततोलंकारिकंदत्तंनानाव
स्त्राणिचंदनम्॥ माल्यानिचप्रदत्तानिमंचोपरिउपाविशत्॥ ७॥ पक्वान्नानिविचित्राणिकृत्वासास्वर्णभा-
जने॥ यमायाभोजयद्देवीयमुनाप्रीतमानसा॥ ८॥ भुक्त्वायमोपिभगिनीमलंकारैःसमर्चयत्॥ नानावस्त्रैस्ततःप्राह-
वरंवरयभामिनि॥ ९॥ इतितद्वचनंश्रुत्वायमुनावाक्यमब्रवीत्॥ ॥यमुनोवाच॥ ॥प्रतिवर्षंसमागच्छभोजना
र्थंतुमद्गृहे॥ १०॥ अद्यसर्वेमोचनीयाःपापिनोनरकाधम॥ येद्यैवभगिनीहस्तात्करिष्यंतिचभोजनम्॥ ११॥ ते-
षांसौख्यंप्रदेहित्वमेतद्देवव्रुणोम्यहम्॥ ॥यमउवाच॥ ॥यमुनायांतुयःस्नात्वासंतर्प्यपितृदेवताः॥ १२॥ भुक्तेच
भगिनीगेहेभगिनींपूजयेदपि॥ कदाचिदपिमद्वारंनसपश्यतिभानुजे॥ १३॥ वीरेशेशानदिग्भागेयमतीर्थंप्र
कीर्त्तितम्॥ तत्रस्नात्वाचविधिवत्संतर्प्यपितृदेवताः॥ १४॥ पठेदेतानिनामानिआमध्यान्हंनरोत्तमः॥ सूर्यस्या
भिमुखोमौनीदृढचित्तःस्थिरासनः॥ १५॥ यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः॥ भूताधिपोद
त्तकृतानुसारीकृतांतमेतद्दशभिर्जपंति॥ १६॥ ततोयमेश्वरंपूज्यभगिनीगृहमाव्रजेत्॥ मंत्रेणानेनचतयाभोजि
तःपूर्णमादरात्॥ १७॥ भ्रातस्तवानुजाताहंभुंक्ष्वभक्तमिदंशुभम्॥ प्रीतयेयमराजस्ययमुनायाविशेषतः॥ १८
ततःसंतोष्यभगिनींवस्त्रालंकरणादिभिः॥ स्वप्नेपियमलोकस्यभविष्यतिनदर्शनम्॥ १९॥ नृपैःकारागृहेयेच

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



स्थापितामम वासरे॥ अवश्यंतेप्रेषणीयाभोजनार्थंस्वसुर्गृहे॥ २०॥ विमोक्तव्यामयापापानरकेभ्योद्यवासरे॥ ये-
घबदिंकरिष्यंतितेताश्चाममसर्वथा॥ २१॥ कनीयसीस्वसानास्तितदाज्येष्ठागृहंव्रजेत्॥ तदभावेसपत्नायाः
पितृव्यास्तदभावतः॥ २२॥ तदभावेमातृस्वसामातुलस्यात्मजातथा॥ सापत्नगोत्रसंबंधैःकल्पयेदथवाक्रमम्॥
२३॥ सार्वभावेमाननीयाभगिनीकाचिदेवहि॥ गोनद्याद्यथवातस्याअभावेसतिकारयेत्॥ २४॥ तदभावेप्यर-
ण्यादिकल्पयित्वासहोदराम्॥ अस्यांनिजगृहेदेवीनभोक्तव्यंकदाचन॥ २५॥ येभुंजंतेदुराचारानरकेतेपतंति
च॥ स्नेहेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्धनम्॥ २६॥ दानानिचप्रदेयानिभगिनीभ्योविशेषतः॥ श्रावणेतुपि
तृव्यस्यकन्याहस्तेनभोजनम्॥ २७॥ मातुलस्यसुताहस्ताद्भोक्तव्यंभाद्रमासके॥ पितुर्भ्रातुःस्वसुःकन्येआ-
श्विनेतुतयोःक्रमात्॥ २८॥ अवश्यंकार्त्तिकेमासिभोक्तव्यंभगिनीकरात्॥ एवमुक्त्वाधर्मराजोययौसंयमिनीं
ततः॥ २९॥ तस्माद्दृषिवराःसर्वेकार्त्तिकेव्रतकारिणः॥ भुंजंतिभगिनीहस्तात्सत्यंसत्यंनसंशयः॥ ३०॥ यमद्विती
यांयःप्राप्यभगिनीगृहभोजनम्॥ नकुर्याद्वर्षजंपुण्यंनश्यतीतिरवेःश्रुतिः॥ ३१॥ यातुभोजयतेनारीभ्रातरंभ्रा
तृकेतिथौ॥ अर्चयेच्चापितांबूलैर्नसावैधव्यमाप्नुयात्॥ ३२॥ भ्रातुरायुःक्षयोनूनंनभवेत्तत्रकर्हिचित्॥ अपरा
ह्णव्यापिनीसाद्वितीयाभ्रातृभोजने॥ ३३॥ अज्ञानाद्यदिवामोहान्नभुक्तंभगिनीगृहे॥ प्रवासिनात्वभावाद्वाज्व
रितेनाथबंदिना॥ ३४॥ एतदाख्यानकंश्रुत्वाभोजनस्यफलंलभेत्॥ ३५॥ इतिसनत्कुमारसंहितायांकार्तिक
माहात्म्येअष्टादशोऽध्यायः॥ ॥वालखिल्याऊचुः॥ ॥कार्तिकेशुक्लनवमीतत्राप्यह्नापरंयुगं॥ पूर्वापराह्णगा २९
ग्राह्याक्रमाद्दानोपवासयोः॥ १॥ अत्रकूष्मांडकोनामहतोदैत्यस्तुविष्णुना॥ तद्रोमभिःसमुद्भूतावल्यःकूष्मां-

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

डसंभवाः॥ २॥ तस्मात्कूष्मांडदानेन फलमाप्नोतिनिश्चितम्॥ अस्यामेव नवम्यांतु कुर्यात्कृष्णोत्सवन्नरः॥ ३॥ स्व
शाखोक्तेनविधिनातुलस्याः करपीडनम्॥ कन्यादानफलंतस्यजायतेनात्रसंशयः॥४॥ कार्तिकेशुक्लनवमीमवाप्य
विजितेंद्रियः॥ हरिंविधायसौवर्णंतुलस्यासहितंशुभम्॥ ५॥ पूजयेद्विधिवद्भक्त्याव्रतीतत्रदिनत्रयम्॥ एवंय
थोक्तविधिनाकुर्याद्वैवाहिकंविधिम्॥ ६॥ ग्राह्यंत्रिरात्रमत्रैवनवम्यामनुरोधतः॥ मध्याह्नव्यापिनीग्राह्यानवमी
पूर्वविधिना॥ ७॥ धात्र्यश्वत्थौयएकत्रपालयित्वासमुद्वहेत्॥ ननश्यतेतस्यपुण्यंकल्पकोटिशतैरपि॥ ८॥ अत्रैवो
दाहरंतीममितिहासंपुरातनम्॥ बभूवविष्णुकांच्यांतुक्षत्रियः कनकाभिधः॥ ९॥ धनाढ्योवैश्यवृत्तिश्चवैष्णवो
राजपूजितः॥ बहुकालोगतस्तस्यविनापत्यंमुनीश्वराः॥ १०॥ ततोनानाव्रतैर्जाताकन्याकमललोचना॥ सुरूपालक्षणो
पेता नानागुणसमन्विता॥ ११॥ पितातस्यानामचक्रे किशोरीतिचविश्रुतम्॥ एकदातद्गृहेयातोजन्मपत्रनिरीक्ष
कः॥१२॥ दर्शयित्वाजन्मपत्रंकथमस्याभवेदिति॥ ततस्तेनक्षणंध्यात्वा कनकश्रृणुमेवचः॥ १३॥ यदिब्रवीमि-
सत्यंचेत्तवदुःखंभविष्यति॥ यद्यसत्यमहंब्रूयांमिथ्यात्वंममजायते॥ १४॥ तस्मात्सत्यंवदिष्यामिरोचतेय
त्तथाकुरु॥ अस्याः करग्रहंकुर्याद्योसौवज्रान्मरिष्यति॥ १५॥ इतितस्यवचः श्रुत्वाजनकोदुःखितोभवत्॥ न-
चकारविवाहोस्याः साचब्राह्मणभोजने॥ १६॥ नियुक्तान्यगृहंदत्तंनानेयामन्तुखाग्रतः॥ दृष्ट्वेमांरूपसंप
न्नांदुःखमेववर्द्धयिष्यति॥ १७॥ स्थित्वान्यस्मिन्गृहेसातु द्विजातिथ्यमचीकरत्॥ तत्रागाद्दैवयोगे-
नकदाचिद्द्विजपुंगवः॥१८॥ यात्रार्थंविष्णुकांच्यांयावैशाखेमासिशंकरः॥ हेमकोविप्रशस्त्रूषीज्ञा
त्वात्रैवसमागतः॥ १९॥ आगत्यांगणमध्येतुउपविष्टोद्विजोत्तमः॥ किशोर्यागत्यचातिथ्यंशंकरस्यकृ

तंतदा॥२०॥दृष्ट्वातांतरुणींनम्रांसुवेषांविनयान्विताम्॥अज्ञातकरपीडांचसखीपृष्ट्वाभ्युवाचसः॥२१॥ ॥शंकरउवा-
च॥ ॥चंदनेवदशीघ्रंत्वंकिशोरीनविवाहिता॥ किमत्रकारणंजातातरुणीकामरूपिणी॥२२॥ इतितद्वचनंश्रु-
त्वाचंदनासर्वमब्रवीत्॥ तदाकृपालुनातेनतस्मिन्नेविनिवेदितम्॥२३॥अस्यैमंत्रंप्रयच्छामिश्रीविष्णोर्द्वाद-
शाक्षरम्॥करोतुवर्षत्रितयंजपमस्यसुलोचना॥२४॥प्रातःस्नानवतीचास्तुतुलसीवनपालिका॥कार्त्तिकस्य
सितेपक्षेनवम्यांविष्णुनासह॥२५॥सौवर्णेनतुलस्याश्चविवाहंचकरोत्वियम्॥तेनव्रतप्रभावेनविधवान
भविष्यति॥२६॥तस्मिन्नापितथेत्युक्त्वाप्रायश्चित्तंसदत्तवान्॥किशोर्यैवैष्णवंधर्मंसमग्रंचादिदेशसः॥२७॥
द्विजेनतेनयत्प्रोक्तंकिशोर्यपितथाकरोत्॥वर्षत्रयंयथाशास्त्रंकिशोर्यातद्व्रतंकृतम्॥२८॥चतुर्थेकार्त्तिकेमा
सिकिशोरीस्नपनायच॥प्रातःकालेगताबालादृष्टश्चाग्रेविलेपिना॥२९॥क्षत्रियेणयदादृष्टाप्रापमोहंजडा
त्मकः॥पृष्टेतस्यास्तुसंलग्नोभावयंस्तामनिंदिताम्॥३०॥केचित्तांददृशुर्दूरात्केचित्पश्यंतिगुप्ततः॥स्त्रियोपि
तांप्रपश्यंतिपुरुषाणांतुकाकथा॥३१॥यथाद्वितीयाचंद्रस्यदर्शनेचोत्सुकाजनाः॥तथारात्रौप्रतीक्ष्यंतेतद्द्वारेस
कलाजनाः॥३२॥निमेषमात्रमर्केणदृष्टास्थित्वातुबालिका॥अधिकंकिंवर्णनीयंतत्सौंदर्यंमुनीश्वराः॥३३॥
केचिद्वदंतिदेवीयंनागकन्येतिचापरे॥रुद्रसंमोहनार्थायजातासामोहिनीतिच॥३४॥सानपश्यतिलोकांश्चनमा
र्गेनसखीगणान्॥ध्यायंतीहृदयेविष्णुंतुलसींदेवरूपिणीम्॥३५॥तांगृहीतुंमनश्चक्रेविलेपीद्रव्यवान्बली
नानाभेदाःकृतास्तेननलेभेचांतरंक्वचित्॥३६॥मालाकारगृहंगत्वातस्यैद्रव्यंप्रयच्छत॥येनकेनप्रकारेणकि ३०
शोर्याःसहसंगमः॥३७॥यथास्यात्क्रियतांभद्रदेयमस्माच्चतुर्गुणम्॥तथाचबहवोपायादृष्टास्तद्गृहणायच॥

॥३८॥ नददर्शततोपायमवदत्सा विलेपिनम्॥ नदृश्यतेमयोपायस्त्वयायस्सोच्यतेधुना॥ ३९॥ मयातदेव वक्तव्यं द्रव्य
ग्रहणसिद्धये॥ ॥विलेप्युवाच॥ ॥तवकन्यातुभूत्वाहं नयामिकुसुमानिच॥ ४०॥ अग्रेयद्भाविभवतुगृहाणा
न्हिशतंशतम्॥ तयापिचतथेत्युक्तासप्तम्यान्निश्चयः कृतः॥ ४१॥ अष्टम्यांसा गता तत्र किशोरीतामुवाचह॥
मालाकृतेश्वोनवमीतुलस्याः पाणिपीडनम्॥ ४२॥ तिष्ठत्यतस्त्वयानेयासुकुटाः पुष्पसंभवाः॥ ॥मालिन्युवाच
॥ ॥मत्कन्याचागताग्रामान्नानाकौतुककारिणी॥४३॥ यद्यसौकं त्वयाबाले समानेष्यतिसत्वरम्॥ तयासापित
थेत्युक्तामालिनीस्वगृहंययौ॥४४॥ कथितः सर्ववृत्तांतोविलेप्यग्रेततोभवत्॥ प्रासामयेंद्रपदवीत्येवंरूपस्वसवा-
पसः॥४५॥ मालिन्यारचितारात्रौमुकुटाविविधास्तदा॥ ॥वालखिल्याऊचुः॥ ॥ विष्णुकांच्यां तदाराजाजय
सेनोबभूवह॥४६॥ तस्यपुत्रोमुकुंदोभूत्सूर्यभक्तिपरायणः॥ किशोर्यास्सश्रुतातेन वार्त्तेयमतिसुंदरा॥४७
॥ तदातेनमुकुंदेन संकल्पः कृतएवहि॥ किशोरीयदिभार्यामेभविष्यति दिवाकर॥४८॥ तदान्नमह मश्नामि
नान्यथास्यान्मृतिर्मम॥ कृत्वेत्थंसतुसंकल्पमुपवासांश्चकारसः॥ ४९॥ सप्तमेहनिसूर्योसौस्वप्नेवचनमब्रवी
त्॥ किशोर्याविधवायोगोवर्त्ततेतेकथंभवेत्॥ ५०॥ सातेपत्नीः प्रदास्यामित्वन्यांपद्मायतेक्षणाम्॥ ॥मुकुंद
उवाच॥ ॥यदिदेवप्रसन्नोसि किंत्वंसृजसित्वंप्रभो॥ ५१॥ बालवैधव्ययोगंचहंतुंत्वंचक्षमोह्यसि॥ इतित
स्यवचः श्रुत्वासोनावबहुलाकुला॥ ५२॥ नमन्यतेमुकुंदोसौतथेत्युक्त्वागतोरविः॥ तुलसीव्रतमहात्म्यात्त्व
न्नोभूत्कनकस्यतु॥५३॥ इयंकन्यात्वयादेयामुकुंदायामलायच॥ तुलस्युद्वाहमाहात्म्याद्विधवात्वंगमिष्यति॥५४॥रा
त्रौस्वप्नः किशोर्यास्तुतस्यांचैवाभ्यजायत॥ आगताकन्यकाकाचिद्धर्त्रासहसमन्विता॥५५॥ भर्तारंवदतिस्वप्नेमम

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



माताकिशोरिका॥ तद्दत्तोपितथेत्युक्त्वाप्रदास्येवलिमुत्तमं॥५६॥ एतद्धस्तेन पश्चात्तुविवाहोस्याभविष्यति॥ स्व
प्नेश्रुत्वाबलेर्दानं सावैचिंतातुराभवत्॥५७॥ कुद्वादशाक्षरीविद्या क्वेदंविष्णुसमर्चनम्॥ नरकद्वारमूलंक्क म
द्धस्तासस्त्रमारणम्॥५८॥ एवंसातुसमस्थाय स्वश्रेयमितिनिश्चितम्॥भावयित्वासमाहूयचंदनांवाक्यमब्रवीत्
॥५९॥निवेद्यदृष्टंस्वप्नंतुकीदृगस्यफलंवद॥ ॥चंदनोवाच॥ ॥फलंतुसम्यक्कल्याणितवानिष्टंविनश्यति॥
६०॥विवाहोभविताशीघ्रंतुलसीव्रतकारणात्॥ इत्थंस्वप्नफलंश्रुत्वातावत्कुक्कुटशब्दितं॥६१॥श्रुत्वासासह-
सोत्थायस्नानोद्यममथाकरत्॥यावद्यातिसास्नानंकृत्वागेहंकिशोरिका॥६२॥तावद्विलेपीमालिन्याःपु
त्रीभूत्वासमाययौ॥ कृताःकेशाश्च गोपुच्छैःश्मश्रुत्वुन्पादितंबलात्॥६३॥अंतरेशाटकंगृत्वानिबध्यांचस्त
नौकृतौ॥सर्वालंकारशोभाढ्याकटाक्षयतिचापरान्॥ ६४॥ नज्ञातासातुकेनापिपुमांस्त्रीरूपधारकः॥ध्या
नंकृत्वाप्रसार्येतेतथाहस्तौयदातदा॥६५॥दत्तेविलेपिःपुष्पाणिविलोकयतिसर्वतः॥ कथमस्यामयस्प-
र्शोभविष्यतिविचिंतयत्॥६६॥एवंदिनत्रयंतस्यप्रयातंतुमुनीश्वराः॥ तस्मिन्नहनिसंजातःकनकःशोक-
पीडितः॥६७॥किंकार्यमधुनास्माभीराजपुत्रोवरिष्यति॥ एवंचिंतयतस्तस्य प्रातःकालोबभूवह॥६८॥
राजलोकाःसमायातागृहीत्वावस्त्रवाहनम्॥ अभ्यंतरंसमागत्य मंत्रीवचनमब्रवीत्॥६९॥ गृहेस्तितवक-
न्यैकासुकुंदार्थेप्रदीयताम्॥ माविचारोस्तुभवतोनृपाज्ञापरिपाल्यताम्॥७०॥ कनकेनतथेत्युक्तंममभा
ग्यमुपस्थितं॥ महाराजकुमारस्यवधूःकन्याभविष्यति॥७१॥ प्रोवाचमंत्रिणंचापिद्वादश्यांलग्नमुत्तमम्॥— ३१
रात्रौनिश्चतियुग्माख्यंरविःपृष्टेविधुश्चखे॥७२॥भवेभौमोगुरुर्धर्मेपंचमेबुधभार्गवौ॥ शनिस्तृतीयेशेरा-

र्विवाहसमयः सतु॥७३॥उभौसंभृतसंभारावुभावपिधनान्वितौ॥ द्वादश्यामाययौसायंराजपुत्रः ससैनिकः॥७४
॥ अब्रवीत्तत्रकनकंतेकीराजपुरोहितः॥ ॥तेकस्तुवाच॥ ॥ अथोनिरोधः क्रियतांकिशोर्यांश्चनृपाज्ञया॥७५॥ भ-
विष्यतिमहादेवीनोदृश्यापुरुषैः क्वचित्॥इतितद्वचनंश्रुत्वापुरुषास्तनिराकृताः॥७६॥जायारूपीविलेपीतुदै-
वात्तत्रैवसंस्थितः॥ ततोर्द्धरात्रवेलायांमुकुंदोभ्यंतरेययौ॥७७॥तुलस्यग्रेस्थिताबालाकिशोरीसंस्मरद्धरिम्॥
ततोघनघटाशब्दस्तुमुलःसमपद्यत॥७८॥ महावायुर्ववौतत्रप्रशांताः सर्वदीपकाः॥ विद्युल्लताश्चस्फुरिताअंधी
भूतोखिलोजनः॥७९॥ मिथ्यानभास्करवचोमुकुंदोचिंतयत्हृदि॥ अन्यैंप्रतर्कितंलोकैर्वैधव्यस्यतुकारणम्॥
८०॥भीतोमुकुंदोहृदयेयावत्ध्यायतिभास्करम्॥तस्यांसंधौधृतंतस्याः करपद्मंविलेपिना॥८१॥तस्याःकर
स्यसंसर्गात्स्वर्गाद्वज्रंपपातके॥ नीतस्तेनविलेपीतुतत्कालंयममंदिरम्॥८२॥ बहिरासीत्कलकलोमुकुंदोयं
मृतस्त्विति॥क्षणादेवततोज्ञातंमालाकारस्तुतामृता॥८३॥ततस्तयोर्विवाहोभूद्राज्यंप्रापकिशोरिका॥ कि
शोर्यांश्चससुतपन्नोभत्क्षार स्तुलसीव्रतात्॥८४॥ आदेशास्त्वंसत्यमासीत्तनोदेवोदिवाकरः॥तुलसीतन्मा
हात्म्यात्कथंनस्युर्मनोरथाः॥८५॥ सौभाग्यार्थंधनार्थंचविद्यार्थंतुनिवृत्तये॥ संतत्यर्थंप्रकर्तव्यंतुलस्याःपा-
णिपीडनम्॥८६॥ इतिसनत्कुमारसंहितायांकार्त्तिकमाहात्म्येतुलसीविवाहोनामएकोनविंशतितमोऽध्यायः
॥ ॥वालखिल्याऊचुः॥ ॥ कार्तिकस्यामलेपक्षेस्नात्वासम्यग्यतव्रतः॥ एकादश्यांतुगृह्णीयाद्व्रतंपंचदिना-
त्मकम्॥१॥शरपंजरसुप्तेनभीष्मेणतुमहात्मना॥ राजधर्मामोक्षधर्मादानधर्मास्ततःपरम्॥ २॥ कथिताःपां
डुदायादैः कृष्णेनापिश्रुतास्तदा॥ ततःप्रीतेनमनसावासुदेवेनभाषितम् ॥ ३॥ धन्यधन्योसि भीष्म-

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



त्वंधर्माः संश्रावितास्त्वया॥ एकादश्यां कार्त्तिकस्य याचितं च जलं त्वया॥४॥ अर्जुनेन समानीतं गांगं बालस्य वेगतः
॥ तुष्टानि तव गात्राणि तस्माद्द्यादिना वधि॥५॥ पूर्णीतं सर्वलोकास्त्वं तर्पयंत्वर्घ्यदानतः॥ तस्मात्सर्वप्रयत्नेन मम
संतुष्टिकारकम्॥६॥ एतद्व्रतं प्रकुर्वंतु भीष्मपंचकसंज्ञितम्॥ कार्तिकस्य व्रतं कृत्वा न कुर्याद्भीष्मपंचकम्॥
७॥ समग्रं कार्तिकव्रतं वृथा तस्य भविष्यति॥ अशक्तश्चेन्नरो भूयादसमर्थश्च कार्त्तिके॥८॥ भीष्मस्य पंचकं
कृत्वा कार्तिकस्य फलं लभेत्॥ सत्यव्रताय शुचये गांगेयाय महात्मने॥९॥ भीष्मायैतद्ददाम्यर्घ्यमाजन्मब्रह्म
चारिणे॥ सव्येनानेन मंत्रेण तर्पणं सार्वकालिकम्॥१०॥ व्रतांगत्वात्पूर्णिमायां प्रदेयः पापपूरुषः॥ अपुत्रेण प्रकर्त-
व्यं सर्वथा भीष्मपंचकम्॥११॥ यः पुत्रार्थं व्रतं कुर्यात्स स्त्री कोभीष्मपंचकम्॥ प्रदत्वा पापपुरुषं वर्षमध्ये स कृतं ल
भेत्॥१२॥ अवश्यमेव कर्त्तव्यं तस्माद्भीष्मस्य पंचकम्॥ विष्णुप्रीतिकरं प्रोक्तं मया भीष्मस्य पंचकम्॥१३॥-
अत्रैव तु प्रकर्त्तव्यः प्रबोधस्तु हरेः खग॥ हतः शंखासुरो दैत्यो नभसः शुक्लपक्षके॥१४॥ एकादश्यां गतो विष्णु-
श्चातुर्मास्ये प्रसुप्तवान्॥ क्षीरांभोधौ जागृतो सौ एकादश्यां तु कार्त्तिके॥१५॥ अतः प्रबोधनं कार्यमेकादश्यां तु-
वैष्णवैः॥ उत्तिष्ठोत्तिष्ठ शंखघ्न उत्तिष्ठांभोधिचारक॥१६॥ कूर्मरूपधरोत्तिष्ठ त्रैलोक्यं मंगलं कुरु॥ उत्तिष्ठो-
त्तिष्ठ वाराह दंष्ट्रोद्धृत वसुंधर॥१७॥ उत्तिष्ठ धरणीधार वराहादिकधारक॥ उत्तिष्ठ भुवनाधार त्रैलोक्यं मंगलं
कुरु॥१८॥ हिरण्याक्षप्राणघातिन् त्रैलोक्यं मंगलं कुरु॥ हिरण्यकशिपुघ्नस्त्वं प्रह्लादानंदकारक॥१९॥ उ
त्तिष्ठ बलिदर्पघ्न देवेंद्रपददायक॥ लक्ष्मीपते समुत्तिष्ठ त्रैलोक्यं॰॥२०॥ उत्तिष्ठादितिपुत्र त्वं त्रैलोक्यं॰॥ उ-
त्तिष्ठ हैहयाधीशसमस्तकुलनाशन॥२१॥ रेणुकाघ्न समुत्तिष्ठ त्रैलोक्यं॰॥ उत्तिष्ठ रक्षोदलन अयोध्यास्वर्गदाय

क॥ समुद्रसेतुकर्त्तात्वंत्रै०॥ २२॥ उत्तिष्ठकंसहनन मदघूर्णितलोचन॥ उत्तिष्ठहलपाणेत्वंत्रै०॥ २३॥ उत्तिष्ठत्वंगयावा-
सिन्त्यक्तलौकिकवृत्तिक॥ उत्तिष्ठपद्मासनगत्रै०॥ २४॥ उत्तिष्ठम्लेच्छनिवहखड्गसंहारकारक॥ अश्ववाहयुगांत-
त्वंत्रै०॥ २५॥ उत्तिष्ठोत्तिष्ठगोविंदउत्तिष्ठगरुडध्वज॥ उत्तिष्ठकमलाकांतत्रै०॥ २६॥ इत्युक्त्वाशंखभेर्यादिप्रातःकालेतु
वादयेत्॥ वीणावेणुमृदंगादिनृत्यगीतादिकारयेत्॥ २७॥ उत्थापयित्वादेवेशं पूजांतस्यविधायच॥ सायंकालेप्रक
र्त्तव्यस्तुलस्युद्वाहजोविधिः॥ २८॥ अवश्यमेवकर्त्तव्यः प्रतिवर्षंतुवैष्णवैः॥ विधिंतस्यप्रवक्ष्यामियथासांगक्रि
याभवेत्॥ २९॥ विष्णोस्तुप्रतिमांकुर्यात्तुलस्यस्वर्णजांशुभाम्॥ तदर्धार्धंतदर्धार्धंयथाशक्त्याप्रकल्पयेत्॥ ३०
॥ प्राणप्रतिष्ठांकुर्वीतवतुलसीविष्णुरूपयोः॥ ततउत्थापयेद्देवंपूर्वोक्तैश्चस्तवादिभिः॥ ३१॥ उपचारैःषोडशभिःपू
जयेत्पुरुषोक्तिभिः॥ देशकालौततःस्मृत्वागणेशंतत्रपूजयेत्॥ ३२॥ पुण्याहंवाचयित्वाथनांदीश्राद्धंसमाचरेत्॥
वेदवाद्यादिनिर्घोषैर्विष्णुमूर्त्तिंसमानयेत्॥ ३३॥ तुलसीनिकटेसातुस्थाप्याचांतर्हितापटैः॥ आगच्छभगवन्देव-
अर्चयिष्यामिकेशव॥ ३४॥ तुभ्यंदास्यामितुलसींसर्वकामप्रदोभव॥ दद्यात्त्रिवारमर्घ्यंचपाद्यंविष्टरमेवच॥ ३५
॥ ततआचमनीयंचत्रिरुक्त्वाचप्रदापयेत्॥ ततोदधिघृतंक्षौद्रंकांस्यपात्रपुटीकृतम्॥ ३६॥ मधुपर्कंगृहाणत्वं
वासुदेवनमोस्तुते॥ हरिद्रालेपनाभ्यंगंकार्यंसर्वंविधायच॥ ३७॥ गोधूलिसमयेपूज्योतुलसीकेशवौपुनः॥ पृथ
क्पृथक्तथाकार्यौसंमुखौमंगलंपठेत्॥ ३८॥ ईषद्दृश्येभास्करेतुसंकल्पंतुसमापयेत्॥ स्वगोत्रप्रवरानुक्त्वात
थात्रिपुरुषादिकम्॥ ३९॥ अनादिमध्यनिधनत्रैलोक्यप्रतिपालक॥ इमांगृहाणतुलसींविवाहविधिनेश्वर॥ ४०
॥ पार्वतीबीजसंभूतांवृंदाभस्मनिसंस्थिताम्॥ अनादिमध्यनिधनांवल्लभांतेददाम्यहम्॥ ४१॥ पयोघटैश्चसे

वाभिःकन्यावद्वर्धितामया॥ त्वत्प्रियांतुलसींतुभ्यंददामित्वंगृहाणभो॥४२॥एवंदत्वाचतुलसींपश्चात्तौपूजयेत्ततः॥
रात्रौजागरणंकुर्याद्विवाहोत्सवपूर्वकम्॥४३॥प्रतिवर्षमिदंकुर्यात्कार्त्तिकव्रतसिद्धये॥४४॥ इतिसनत्कुमारसं
हितायांकार्त्तिकमाहात्म्येतुलसीविवाहकथनंनामविंशतितमोऽध्यायः॥ ॥वालखिल्याऊचुः॥ ॥ततःप्रभातसम
येतुलसींविष्णुमर्चयेत्॥ वन्हिसंस्थापनंकृत्वाद्वादशाक्षरविद्यया॥ १॥पायसाज्यक्षौद्रतिलैर्जुहुयादष्टोत्तरं
शतम्॥ ततःस्विष्टकृतंहुत्वादद्यात्पूर्णाहुतिंततः॥ २॥आचार्यंचसमभ्यर्च्यहोमशेषंसमापयेत्॥ चतुरोवार्षिका
न्मासान्नियमोयेनयःकृतः॥ ३॥कथयित्वाद्विजेभ्यस्तत्तथान्यस्सरिपूजयेत्॥ इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो॥४॥
न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दन॥रेवतीतुर्यचरणद्वादशीसंयुतेनरः॥५॥नकुर्यात्पारणंकुर्वन्व्रतंनिष्फ
लतांव्रजेत्॥ततोयेषांपदार्थानांवर्जनंतुकृतंभवेत्॥६॥चातुर्मास्येथवाचोर्जेब्राह्मणेभ्यःसमर्पयेत्॥ततःसर्वं
समानीयाद्यद्यत्यक्तंव्रतेस्थितम्॥७॥दंपतीभ्यांसहैवात्रभोक्तव्यंचद्विजैःसह॥ ततोभुक्त्युत्तरंयानिगलितानि
दलानिच॥८॥तानिभुक्त्वातुलस्याश्चस्वयंपापैःप्रमुच्यते॥इक्षुदंडंतथाधात्रीफलंकोलिफलंतथा॥९॥भुक्त्वातुभोज
नस्यांतेतस्योच्छिष्टंविनश्यति॥ एषुत्रिषुनभुक्तंचेदेकैकमपियेनतु॥१०॥ज्ञेयउच्छिष्टआवर्षंनरोसौनात्रसंशयः॥त
तःसायंपुनःपूजांइक्षुदंडैश्चशोभितैः॥११॥तुलसीवासुदेवौचकृतकृत्योभवेत्ततः॥ ततोविसर्जनंकृत्वादत्वादा
यादिकंहरेः॥१२॥वैकुंठंगच्छभगवंस्तुलसीसहितःप्रभो॥ मत्कृतंपूजनंगृह्यसंतुष्टोभवसर्वदा॥१३॥ गच्छ
गच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर॥ यत्रब्रह्मादयोदेवास्तत्रगच्छजनार्दन॥ १४॥ एवंविसृज्यदेवेशमाचार्या ३३
यप्रदापयेत्॥ मूर्त्यादिकंसर्वमेवकृतकृत्योभवेन्नरः॥ १५॥ प्रतिवर्षंकरोत्येवंतुलस्युद्वाहनंशुभम्॥

इहलोकेपरत्रापिविपुलंसयशोलभेत्॥१६॥प्रतिवर्षेतुयःकार्यातुलसीकरपीडनम्॥भक्तिमान्धनधान्यैश्चसंयुक्तो
भवतिनिश्चितम्॥१७॥इतिसनत्कुमारसंहितायांकार्त्तिकमाहात्म्येतुलसीविवाहफलानुकीर्त्तनंनामएकवि
शतितमोऽध्यायः॥ ॥वालखिल्याऊचुः॥ ॥कार्त्तिकस्यसितेपक्षेचतुर्दश्यांसमागमत्॥वैकुंठेशस्तुवैकुंठाद्वारा
णस्यांकृतेयुगे॥१॥रात्र्यांतुयोगशेषायांस्नात्वासौमनकर्णिके॥गृहीत्वाहेमपद्मानिसहस्रेकंततोव्रजेत्॥२॥अति
भक्त्यापूजयितुंशिवयासहितंशिवम्॥विधायपूजांवैश्वेश्वरींततःपद्मैरपूजयत्॥३॥सहस्रसंख्यांकृत्वादावेकना
म्नाततःपरम्॥आरब्धंपूजनंतेनशिवस्तद्भक्तिमैक्षत॥४॥एकंपद्मंपद्ममध्यान्निलीयान्तंहरेणतु॥ततःपूजितवा
न्विष्णुरेकोनंकमलंत्वभूत्॥५॥इतस्ततस्तेनदृष्टंपद्मंतिष्ठतिनक्वचित्॥कमलेषुभ्रमोजातोथवानामस्मृतेभ्रमः॥
६॥क्षणंविचार्यसहरिर्नमेनामभ्रमोभवत्॥पद्मेचैवभ्रमोजातोविचार्यैवंपुनःपुनः॥७॥सहस्रपद्मसंकल्पःपू
जार्थंतुकृतोमया॥अर्च्चःकथंमहादेवएकोनकमलैर्मया॥८॥यद्यानेतुंगमिष्यामिभंगस्यादासनस्यतु॥अतः
परंकिंविधेयंचिंतोद्विग्नोहरिस्तदा॥९॥एकःप्रकारउत्पन्नोहृदयेस्यमुनीश्वराः॥नेत्रंमेपद्मसदृशंपद्माथैत्वर्पया
म्यहम्॥१०॥इतिनिश्चित्यमनसादत्वातर्जनिकांसतु॥नेत्रमध्यात्तदुत्पाद्यमहादेवस्तुपूजितः॥११॥ततो-
महेश्वरस्तुष्टोवाक्यमेतदुवाचह॥ ॥महादेवउवाच॥ ॥त्वत्समोनास्तिमद्भक्तस्त्रैलोक्येसचराचरे॥१२
॥राज्यंदत्तंत्रिलोक्यास्तेभवत्वंलोकपालकः॥अन्यंवरयभद्रंतेवरंयन्मनसेप्सितम्॥१३॥अवत्रयमेवदास्या
मिनात्रकार्याविचारणा॥मद्भक्तिंयःसमालंब्ययेद्विषंतिजनार्दनम्॥१४॥नेमद्दृष्टानराविष्णोव्रजे-
युर्नरकंध्रुवम्॥ ॥विष्णुरुवाच॥ ॥त्रैलोक्यरक्षाकरणंमयादिष्टंमहेश्वर॥१५॥दुर्मदाश्चमहास

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



त्वांदैत्यामार्याः कथंमया॥ ॥शिवउवाच॥ ॥एतत्सुदर्शनंचक्रंमहादैत्यनिकृंतनम्॥१६॥गृहाणभगवन्विष्णो—
मयातुभ्यंनिवेदितम्॥अनेनसर्वदैत्यानांभगवन्कदनंकुरु॥१७॥एवंचक्रंहरेर्दत्वाततोवचनमब्रवीत्॥ ॥शिव
उवाच॥ ॥वर्षेचहेमलंबाख्येमासेश्रीमतिकार्त्तिके॥१८॥शुक्लपक्षेचतुर्दश्यामरुणाभ्युदयंप्रति॥महाब्देचतिथौ
ब्राह्मेमुहूर्तेमनकर्णिके॥१९॥स्नात्वाविश्वेश्वरंलिंगंवैकुंठाद्यैस्त्वपूजितम्॥सहस्रकमलैस्तुस्माद्भविष्यतिममप्रि
या॥२०॥विख्यातासर्वलोकेषुवैकुंठाख्याचतुर्दशी॥अन्यंवरंप्रदास्यामिशृणुविष्णोवचोमम॥२१॥पूर्वरात्रेतु
तेपूजाकर्त्तव्यासर्वजातिभिः॥उपवासंदिवाकुर्यात्सायंकालेतवार्चनम्॥२२॥पश्चान्ममार्चनंकार्यमन्यथानिष्फ
लंभवेत्॥ग्राह्यातुहरिपूजायांरात्रिव्यापाचतुर्दशी॥२३॥अरुणोदयवेलायांशिवपूजांसमाचरेत्॥सहस्र
कमलैर्विष्णुरादौयैःपूजितोनरैः॥२४॥पश्चाच्छिवःपूजितश्चेज्जीवन्मुक्तास्तएवहि॥सायंस्नात्वापंचनदेविं
दुमाधवमर्चयेत्॥२५॥सहस्रनामभिर्विष्णोःकमलैःसुमनोहरैः॥मनिकर्ण्यांततःस्नात्वाविश्वेश्वरमथार्चये
त्॥२६॥सहस्रनामभिःपुण्यैर्जीवन्मुक्तःसएवहि॥स्नात्वायोविष्णुकांच्यांवानंतसेनंसमर्चयेत्॥२७॥रुद्र
कांच्यांततःस्नात्वाप्रणवेशंसमर्चयेत्॥पृथिव्यांचश्रुतायेयेधर्माःप्रोक्तामनीषिभिः॥२८॥सर्वेषांफलमाप्नो
तिनात्रकार्याविचारणा॥आदौस्नात्वावन्हितीर्थेयजेन्नारायणंततः॥२९॥रेतोदकेततःस्नात्वाकेदारेशंसमर्च
येत्॥इहैवार्थवतानर्थोभवेन्नास्त्यत्रसंशयः॥३०॥स्थलपद्मेस्तत्रपूजाकर्त्तव्याजलजक्षयात्॥आदौस्नात्वासूर्य
पुत्र्यांवेणीमाधवमर्चयेत्॥३१॥जान्हव्यांचततःस्नात्वासंगमेशंप्रपूजयेत्॥रक्तपद्मैःश्वेतपद्मैर्हरिरुद्रौक्रमेणच ३५
॥३२॥सर्वाःश्रियस्तस्यवशयाःसत्यंविष्णोमयोदितम्॥मोक्षार्थंकाशिकामध्येबिंदुमाधवमीश्वरम्॥ ३३॥ नल—


CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

भेत्पूजयित्वाकिंमोक्षंनातारकंविना॥ विनायोहरिपूजांतुकुर्याद्रुद्रस्यचार्चनम्॥ ३४॥ वृथातस्यभवेत्पूजास
त्यमेतद्वचोमम॥ एवंतस्यैववरान्दत्वात्वंतर्द्धानंययौशिवः॥ ३५॥ तस्मात्सर्वप्रयत्नेनपूज्यौहरिहरावुभौ॥ प्रासेक
लियुगेघोरेशौचाचारविवर्जिते॥ ३६॥ तत्त्वसंख्यैर्वर्षशतैर्गतैर्देवोमहेश्वरः॥ वाराणसीस्थलिंगानिपातालेस
हिनेष्यति॥ ३७॥ ततोद्विगुणवर्षैस्तु गंगावाराणसीतथा॥ भविष्यतिअदृश्यासा तत्त्वरूपमुनीश्वराः॥ ३८॥
अंतर्हितायदाकाशीभविष्यतितदामुने॥ नात्रास्तुलिंगचिन्हानांनिष्प्रभाःसकलाजनाः॥ ३९॥ चतुर्दिशासु
दुर्भिक्षंमहामारीसमुद्भवः॥ गोवधश्चापिसर्वत्रमृत्तिकाभस्मसन्निभा॥ ४०॥ गांगतोयातुयाधारापतेद्भा
गीरथाश्रमे॥ हरिद्वाराच्चवायव्येतस्यालोपोभविष्यति॥ ४१॥ भागीरथ्यांगतायांतुमर्कटीतंतुसन्निभाः॥ भ
विष्यंतिजलेकीटास्तोयंनीलीनिभंतथा॥ ४२॥ चतुर्वर्षसहस्रैस्तु शैलस्थाःसर्वदेवताः॥ सत्यंसत्वागमि
ष्यंतिमानसंचसरोवरम्॥ ४३॥ गतेषुसर्वदेवेषुराजानोधैर्यविच्युताः॥ पापिष्ठाश्चदुराचारानानेतिप
रपीडिताः॥ ४४॥ कलेरष्टुतवर्षाणिभविष्यंतियदाखग॥ श्रौतमार्गस्यलोपस्तुभविष्यतिनसंशयः॥
४५॥ तदालोकाभविष्यंतिमद्यपानपरायणाः॥ स्वल्पायुषःस्वल्पभाग्यानानारोगैश्चपीडिताः॥ ४६
द्विजास्तुदक्षिणेदेशेवेदज्ञाःसंभवंतिच॥ आनीयतान्शाकःकर्त्ताधर्मसंस्थापयिष्यति॥ ४७॥ इतिस
नत्कुमारसंहितायांकार्त्तिकमाहात्म्येद्वाविंशतितमोऽध्यायः॥ ॥वालखिल्याऊचुः॥ ॥कार्त्तिक्यांपू
र्णिमायांतुकुर्याच्चैपुरमुत्सवम्॥ दीपोदेयोवश्यमेवसायंकालेशिवालये॥ १॥ त्रिपुरोनामदैत्येंद्रःप्रया
गेतपआस्थितः॥ लक्षवर्षंतपस्तप्तंत्रैलोक्यंसचराचरम्॥ २॥ नत्तपस्तेजसारब्धंदग्धंतुभुवनत्रयम्॥ नानादेवां-

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



गनादेवैः प्रेषिताः संविमोहितुम्॥३॥नतासांवशगःसोभूद्धर्षणेश्चापिधर्षितः॥नक्रोधमोहलोभानांवशोदैत्योव्रजा
यते॥४॥वरंदातुंययौब्रह्मानारदादिभिरन्वितः॥ ॥ब्रह्मोवाच॥ ॥वरंवरयभद्रंतेसंतुष्टोहंपितामहः॥५॥तप
सातुफलेसिद्धेकः क्लेशंसहतेजनः॥ ॥त्रिपुरउवाच॥ ॥अमरंकुरुमांब्रह्मन्करोमित्वन्यथातपः॥६॥दातुंश
क्नुंनचेद्ब्रह्मन्नन्यथागच्छसत्वरम्॥ ॥ब्रह्मोवाच॥ ॥मयापिबालमर्त्तव्यमितरेषांतुकाकथा॥७॥अवश्यंदेहिनांमृ
त्युः संभाव्यंयाचयस्वमे॥ ॥त्रिपुरउवाच॥ ॥नमेमृत्युर्देवताभ्योमनुष्येभ्योनिशाचरात्॥८॥नस्त्रीभ्योनचरो
गेणदैत्येवंवरमुत्तमम्॥ब्रह्मापिचतथेत्युक्त्वासत्यलोकंजगामसः॥९॥एवंलब्धवरंज्ञात्वानानादैत्याः समाययुः॥ता
न्दैत्यानागतान्दृष्ट्वासोज्ञापयतदानवान्॥१०॥अस्मद्विरोधिनोदेवाधर्त्तव्याः सर्वएवहि॥नोचेद्यानिचरत्नानिदे-
वादीनांसमीपतः॥११॥गृहीत्वातानिसर्वाणिकुर्वंतूपायनंमम॥इत्याज्ञांतस्यशिरसिकृत्वातेसर्वदानवाः॥१२॥देवा
न्नागांश्चयक्षांश्चधृत्वाग्रेविनिवेदिताः॥प्रणम्यसर्वदेवास्तंत्रिपुरंचव्यजिज्ञपुः॥१३॥गृह्यतांदैत्यराजेंद्रयदस्माकंभ
विष्यति॥वयंकृत्वातुतेसेवांजीविष्यामोयथातथा॥१४॥इतिश्रुत्वावचस्तेषामधिकारच्युताःकृताः॥तेषांस्त्रियः
समानीयदेववेश्याः सहस्रशः॥१५॥एवंभास्करमुत्सृज्यसर्वेदेवास्तदाज्ञया॥चक्रुर्यथोक्तंदैत्यस्यद्वारस्थाःस
र्वएवहि॥१६॥सूर्यस्यनिकटेप्युक्तंमद्वारेस्थीयतांसदा॥तेनापिचतथेत्युक्त्वातद्वारेसंस्थितंक्षणम्॥१७॥ददाह
भवनंसर्वंस्वकरैःक्षणमात्रतः॥आदिष्टश्चततस्तेनस्वेच्छयागम्यतामिति॥१८॥ततोगतोसौभगवान्भुवनानिवि
भावयन्॥चक्रुर्देवास्तदाज्ञांचद्वारितिष्ठंतिवारिताः॥१९॥कदाचित्तस्यगेहेतुनारदःसमुपाययौ॥तेनापिपूजितोभ ३५
क्त्यापप्रच्छस्वपराक्रमान्॥२०॥ ॥नारदउवाच॥ ॥ईदृशोजयघोषस्तुनकेनापिकृतोभुवि॥अस्मिंदेवोतुदैत्यं-


CC-0. In Public Domain. UP State Museum, Hazratganj. Lucknow

द्रकिमिदानींनिगद्यताम्॥ २१॥ ॥त्रिपुरउवाच॥ ॥सर्वस्थलेषुमेकीर्तिर्नगताकिंतुनारद॥ मयाप्रस्थापितादै-
त्याः सर्वएवइतस्ततः॥ २२॥ ॥नारदउवाच॥ ॥यत्रयत्रगतोदैत्यस्तत्रतत्रप्रभुःसहि॥ तवनामनगृह्णातिवक्ति
चस्वपराक्रमम्॥ २३॥ इतिश्रुत्वामुनिस्तेनसद्यएवविदायितः॥ क्रोधश्चास्यमहान्जातः किंकर्तव्यंमयाधुना॥
२४॥ विश्वकर्माणमाहूयवाक्यमेतदुवाचह॥ शीघ्रंकुरुत्रिधातूनांविद्ध्वकर्मसुरत्रयम्॥ २५॥ विमानतुल्यंय
त्रेच्छातत्रतत्रगमिष्यति॥ इतितस्यवचः श्रुत्वात्वष्टापिचतथाकरोत्॥ २६॥ रूपत्रयंसमास्थायत्रिपुरेषुसमाश्रि
तः॥ नारदस्यतुवाक्येनदैत्याबंदीकृतास्तदा॥ २७॥ पुरेणैकेनपातालेभ्रमतेत्रिपुरासुरः॥ स्वर्गेचापिपुरेकेनधर-
णीमटतेपुरा॥ २८॥ कांश्चित्संताडयत्येवंसंमारयतिकानपि॥ ददातिकेषांस्वामित्वंस्वेच्छाचारीमहाबलः॥ २९॥
तेनेत्थंपंचलक्षाणिसर्वेलोकाउपद्रुताः॥ तदादेवान्समागम्यनारदोवाक्यमब्रवीत्॥ ३०॥ ॥नारदउवाच॥ ॥पराक्र
मायास्कृतेधिक्देवेंद्रक्वगतास्तिधीः॥ विचारयंतुभोदेवावधायत्रिपुरस्यच॥ ३१॥ इत्थंमुनिवचः श्रुत्वासलज्जोभू-
द्धोसुरवः॥ पुनस्तंनारदः प्राहब्राह्मणंशरणंव्रज॥ ततउत्थायदेवेंद्रोगृटोदेवगणैःसह॥ ३२॥ नारदेनसमायुक्तः
सत्यलोकंजगामसः॥ तत्रापश्यत्सधातारमुवाचकरुणंवचः॥ ३३॥ ॥इंद्रउवाच॥ ॥धातरस्मद्गतिर्नास्तिहननी
यास्त्वयावयम्॥ नासाग्रेसंस्थिताः प्राणास्त्रिपुरस्यतुशासनात्॥ ३४॥ इतींद्रवचनंश्रुत्वाब्रह्मासेंद्रोमुनीश्वरैः॥
सद्योवैकुंठमगमद्यत्रास्तेमधुसूदनः॥ ३५॥ तत्रगत्वामहाविष्णुंप्रणिपत्यास्थिताःसुराः॥ अनुगृहीत्वाद्दृष्यातै-
स्तंब्रह्मावाक्यमब्रवीत्॥ ३६॥ ॥ब्रह्मोवाच॥ ॥भगवन्देवदेवेशदेवापत्तिविनाशन॥ त्रिपुरासुरनिर्दग्धान्
किंदेवास्त्वमुपेक्षसे॥ ३७॥ ॥श्रीविष्णुरुवाच॥ ॥त्वयैवनाशितंब्रह्मन्दत्तानानाविधावराः॥ देवादिभ्यः कथंत-

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



स्यमृत्युःसंभाव्यतेधुना॥३८॥नभासतेविचारोमेतस्यमृत्यौसुरेश्वराः॥अस्तिकश्चिद्यदोपायःकथंवैकरवाण्यहम्॥३९
॥इतिश्रुत्वावचोविष्णोःसर्वेबुध्यातुकुंठिताः॥यदानोचुर्वचःकिंचिन्नारदोवाक्यमब्रवीत्॥४०॥ ॥श्रीनारदउवाच
॥ ॥कुर्वंतुस्वेदंमादेवाउपायःकथ्यतेमया॥एकोहृष्टःसृष्टिमध्येनदेवोनचमानुषः॥४१॥नराक्षसोनवैदैत्योन
भूतोनपिशाचकः॥नसौपुमान्नचस्त्रीतुनजडोनचपंडितः॥४२॥नास्यतातोनवामातानभ्रातानभगिनीनच॥तथै
वतस्यसंतानंसएनंमारयिष्यति॥४३॥ ॥ब्रह्मोवाच॥ ॥एतादृशःक्वदृष्टोसौसत्यंवालीकमेववा॥इतिब्रह्मवचः-
श्रुत्वाप्रोवाचजगदीश्वरः॥४४॥ ॥श्रीविष्णुरुवाच॥ ॥अहोत्रैलोक्यनाथोसौमहादेवोवृषध्वजः॥ब्रह्मन्कथंवि
स्मृतोसौसनःकार्यंकरिष्यति॥४५॥इत्युक्त्वासर्वएवैतेशंकरंशरणंययुः॥ ॥देवाऊचुः॥ ॥देवदेवमहादेवदैत्यें
द्राङ्कुशापीडिताः॥४६॥त्वामेवशरणंप्राप्तास्त्रिपुरेणप्रपीडिताः॥ ॥श्रीशिवउवाच॥ ॥ब्रह्मंस्त्वयावरोदत्तउन्मत्तो
सौभवत्तदा॥४७॥प्रदिष्टोसिवरःकस्मात्पुनर्मारयसेकथम्॥मदीयंनाशितंतेनकस्माद्वध्योमयासुरः॥४८॥इति
रुद्रवचःश्रुत्वाहताशास्तेसुरास्तदा॥तादृशांस्तान्सुरान्दृष्ट्वाविष्णुर्वचनमब्रवीत्॥४९॥ ॥विष्णुरुवाच॥ ॥त्वया
प्रतिज्ञालोकानांपालनायसदाशिव॥कृतातस्त्वांसमायाताःशरणंसर्वदेवताः॥५०॥मयानानाविधंदुःखंहीयते-
तुसदाशिव॥एतद्दुःखंमयाशक्यमपनेतुंयतोनहि॥५१॥अतस्त्वांयाचयाम्यद्यदेवान्बंदेर्विमोचय॥ ॥श्रीशि
वउवाच॥ ॥तववाक्यंकरिष्यामिसामग्रीनास्तिमेगृहे॥ममापराधरहितंहनिष्यामिनदानवम्॥५२॥ ॥विष्णु
रुवाच॥ ॥सामग्रींतुकरिष्यामिसंग्रामार्थंसदाशिव॥करिष्यतिकथंदैत्यःशंभोरन्यायमेवसः॥५३॥इतिविष्णु ३६
वचःश्रुत्वाहाकष्टमितिचाब्रवीत्॥अत्रागमिष्यत्यस्माकंशृणुयात्त्रिपुरासुरः॥५४॥नविलंबोमृतौकुर्यात्किमि

दानींविधीयताम्॥ सुरान्म्लानमुखान्दृष्ट्वानारदोवाक्यमब्रवीत्॥ ५५॥ ॥नारदउवाच॥ ॥सामग्रीक्रियतांशीघ्रमा
यातित्रिपुरासुरः॥ विष्णुंपलायितंदृष्ट्वाहरुद्रोस्तीतिलोकयन्॥ ५६॥ मया ननाशितंतस्ययदियास्यतिमत्स्थले
॥ योद्धुंतदावश्यमेवमयामार्यःसुदुर्मदः॥ ५७॥ इतिरुद्रवचःश्रुत्वासमाश्वस्तास्तुदेवताः॥ सामग्रींविष्णुरकरो-
द्युद्धार्थंसतुधूर्जटेः॥ ५८॥ बाणःस्वयंबभूवास्यवन्हिःशल्यंबभूवसः॥ वायुस्तुपुंखरूपोभून्मैनाकंचधनुःकरोत्॥ ५९
॥स्यंदनंधरणीजातावेदाजाताहयोत्तमाः॥ विधातासारथिर्जातःपताकाचदिवाकरः॥ ६०॥ आतपत्रंचचंद्रोभूद्गणे
शाद्याःपदातयः॥ ततोवेगात्ससुरस्यनारदस्त्रिपुरंययौ॥ ६१॥ श्रुत्वानारदमायांतंसत्कारैरर्चयेत्ततम्॥ मुनेपुरा-
णिपत्रयाद्यस्त्वजेयानिसुरासुरैः॥ ६२॥ त्रैलोक्येचाधुनाजातंत्वत्कृपातोयशोमुने॥ इतितस्यवचःश्रुत्वाललाटंकु-
टयन्मुनिः॥ ६३॥ तूष्णीमासीद्विसिस्मैतदवलोक्यासुरोब्रवीत्॥ ॥त्रिपुरउवाच॥ ॥किमर्थंचेदृशीचेष्टामुनेचाद्य
कृतात्वया॥ ६४॥ मद्भाग्यसमभाग्यश्चेदस्तिकश्चिन्निगद्यताम्॥ ॥नारदउवाच॥ ॥कैलासेतुगतश्चाहंदैत्येंद्रःश्रु
णुवैभवम्॥ ६५॥ महेश्वरस्यकिंवाच्यंतल्लक्षांशोपिनत्वयि॥ इतितद्वचनंश्रुत्वानारदस्तुविदायितः॥ ६६॥ गृही
त्वादैत्यसंघान्स कैलासंत्रिपुरोययौ॥ तत्रदेवैर्महद्युद्धंजातंतत्रदिनत्रयम्॥ ६७॥ पश्चाद्धरेणनिहतस्त्रिपुरश्चै
कबाणतः॥ कार्तिक्यांपूर्णिमायांतुसर्वदेवाःप्रतुष्टुवुः॥ ६८॥ तस्मिन्दिनेसर्वदेवैर्दीपादत्ताहरायच॥ सर्वथैवप्र
देयाश्चदीपास्तुहरतुष्टये॥ ६९॥ विंशतिःसप्तशतकाःसहितादीपवर्तयः॥ ददद्दीपंपूर्णिमास्यांसर्वपापैःप्र
मुच्यते॥ ७०॥ पौर्णिमास्यांतुसंध्यायांकर्त्तव्यःत्रिपुरोत्सवः॥ दद्यादनेनमंत्रेणप्रदीपांश्चसुरालये॥ ७१॥ की
टाःपतंगामशकाश्चवृक्षाजलेस्थलेयेविचरंतिजीवाः॥ दृष्ट्वाप्रदीपंनचजन्मभागिनोभवंतिनित्यंश्वपचाहि

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



विप्राः॥७२॥कार्तिक्यांतुवृषोत्सर्गंकृत्वानक्तंसमाचरेत्॥शैवंपदमवाप्नोतिशिवव्रतमिदंस्मृतम्॥कार्यस्तस्मात्पौर्ण
मास्यांत्रिपुरायमहोत्सवः॥७३॥इतिसनत्कुमारसंहितायांकार्तिकमहात्म्येत्रिपुरोत्सवदीपन विधिर्नामत्रयोविं
शोध्यायः॥ ॥वालखिल्याऊचुः॥ ॥अथोर्जव्रतिनःसम्यगुद्यापनमथोच्यते॥कृते उद्यापनेसांगंव्रतंभवतिनि
श्चितम्॥१॥ऊर्जशुक्लचतुर्दश्यांकुर्यादुद्यापनंव्रती॥तुलस्याउपरिष्टात्तुकुर्यान्मंडपिकांशुभाम्॥२॥तुलसीमूल
देशेचसर्वतोभद्रमेवच॥तिर्यगूर्ध्वंकृतारेखाऊनविंशतिसंज्ञकाः॥३॥खंडेंदुःस्त्रिपदंकोणेशृंखलापंचभिःप
दैः॥एकादशपदावल्लीभद्रंतुनवभिःपदैः॥४॥चतुर्विंशत्पदावापीपरिधिर्विंशतिस्मृतः॥मध्येषोडशभिःको
ष्ठैःपद्ममष्टदलंस्मृतम्॥५॥खंडेदेवोवेदसंख्यावाप्योपिश्वेतवर्णकाः॥चतस्रःशृंखलाःश्यामारक्तंभद्राष्टकं
स्मृतम्॥६॥वल्ल्यष्टकंनीलरूपंपीतरक्तपरिधिर्भवेत्॥कमलंपंचरंगंतुयथाशोभंबुधोलिखेत्॥७॥तस्योपरि
शत्कलशंपंचरत्नसमन्वितम्॥पूजयेत्तत्रदेवेशंसौवर्णंगुर्वनुज्ञया॥८॥रात्रौजागरणंकुर्याद्गीतवाद्यादिमंग-
लैः॥ततस्तुपौर्णमास्यांवैसपत्नीकान्द्विजोत्तमान्॥९॥त्रिंशन्मितान्तदर्धंवाशक्त्यैकंवानिमंत्रयेत्॥अतोदे
वाइतिद्वाभ्यांहोमयेत्तिलपायसम्॥१०॥ततोवैकपिलांदद्यात्पूजयेद्विधिवद्गुरुम्॥परात्रपौर्णिमास्यांतुयात्रास्यात्पु
करस्यतु॥११॥एवमुद्यापनंकृत्वासम्यग्व्रतफलंलभेत्॥वरांदत्वायतोविष्णुर्मत्स्यरूप्यभवत्ततः॥१२॥तस्यांद-
त्तंहुतंजप्तंतदक्षय्यंफलंभवेत्॥कार्तिक्यांपौर्णिमायांतुविष्णुंनीराजयेत्सदा॥१३॥प्रदोषसमयेराजन्नदा
रिद्र्यमवाप्नुयात्॥कार्तिक्यांकृत्तिकायोगेयःकुर्यात्स्वामिदर्शनम्॥१४॥सप्तजन्मभवेद्विप्रोधनाढ्योवेदपार ३७
गः॥एतानिकार्तिकेमासिनरःकुर्याद्व्रतानितु॥१५॥इहलोकेशरीरंसंक्लेशयित्वाफलंलभेत्॥नकार्तिकसमो

मासोविष्णुसंतुष्टिकारकः॥१६॥स्वल्पकैर्दिनैर्विष्णुलोकः प्रापकोनापरोभवेत्॥ इत्यंतेनैमिषारण्येवालखिल्यैरुदाहृतम्
॥१७॥भास्करस्यसुखात्कृत्वाततस्तानभिवाद्यच॥ययौस्सूर्यस्यनिकटेकुर्वंतोभास्करस्तुतिम्॥१८॥ इत्येतत्सर्वमा-
ख्यातंकार्तिकस्यव्रतोत्तमम्॥ यत्कृत्वासर्वपापेभ्योमुक्तोभवतितत्क्षणात्॥१९॥ अतःपरंकिंवक्ष्यामिब्रूह्यात्रे
यससत्वरम्॥२०॥ इतिसनत्कुमारसंहितायांकार्तिकमाहात्म्येउद्यापनविधिर्नामचतुर्विंशतितमोऽध्यायः॥ ॥
॥ ॥अत्रेयउवाच॥ ॥अद्भुतोयंत्वयाप्रोक्तोमहिमाकार्त्तिकस्यतु॥स्वस्यकर्त्तुमसामर्थ्येकथमेतत्कृतंभवेत्॥-
१॥ ॥कुमारउवाच॥ ॥नास्तिकर्त्तुंस्वसामर्थ्यमुपायात्प्राप्यतेफलम्॥द्रव्यंदत्वाब्राह्मणायगृह्णीयात्फलमुत्तमम्
॥२॥शिष्याद्वाभृत्यवर्गाद्वास्त्रीभ्योवाप्यन्यकारयेत्॥तस्मादपिफलंगृह्णन्फलभाग्जायतेनरः॥३॥ ॥अत्रेय
उवाच॥ ॥अदत्तान्यपिपुण्यानिप्राप्यंतेकेनचित्क्वचित्॥ एतदिच्छाम्यहंश्रोतुंकौतुकंममवर्त्तते॥४॥ ॥सन-
त्कुमारउवाच॥ ॥अदत्तान्यपिपुण्यानिलभंतेपातकान्यपि॥येनोपायेनतद्वच्मिशृणुष्वैकमनाद्विज॥५॥सुकृ
तंवादुष्कृतंवाकृतमेकेनयत्कृते॥जायतेतस्यतद्राष्ट्रेत्रेतायांतुपुरोभवेत्॥६॥द्वापरेवंशमध्येतुकलौकर्त्तैवके
वलम्॥अज्ञानाद्यत्कृतंकर्मबाल्येस्वप्नेतुतत्फलम्॥७॥ अज्ञानाद्यच्चतारुण्येबाल्येतस्यफलंभवेत्॥ज्ञानपूर्व-
कृतंकर्मआजन्मांतंचतत्फलम्॥८॥षण्मासंपापिसंगेननरःपापीप्रजायते॥ पापिनांवाधर्मिणांवासंसर्गाद्
त्रामासकम्॥९॥भोजनादेकपंक्त्याचविंशांशःपुण्यपापयोः॥एकासनेद्वयोर्वासात्सहस्रांशेनलिप्यते॥१०॥यो
वैयस्यान्नमश्नातिसभुंक्तेतस्यकिल्बिषम्॥जपादौपापिसंसर्गात्षोडशांशोविनश्यति॥११॥परस्यस्तवनाद्यो
नादेकपात्रस्थभोजनात्॥एकशय्यामाचरणात्सर्वांशःपुण्यपापयोः॥१२॥पुरुषोहरतेसर्वंभार्यायाऔरसस्य

का॰मा॰ ३८ च॥ अर्द्धं शिष्याश्चतुर्थांशं पापं पुण्यं तथैव च॥ १३॥ भर्तुराज्ञाकरी नारी भर्तुः स्वर्द्धं षं हरेत्॥ यद्दत्तपक्वं भुंजीयाद्दत्तां
शं तदघं हरेत्॥ १४॥ वर्षाशनं तु यो दत्ते तदर्धाघस्य भागयम्॥ वर्षाशनार्धपुण्यं तु भुंक्ते वर्षाशनी नरः॥ १५॥ पुरोहित
स्य षष्ठांशं पापं वा पुण्यमेव वा॥ यजमानो भुनक्त्येव तद्दशांशं पुरोहितः॥ १६॥ उद्योगी वानुमंता च यश्चोपकरणप्रदः॥
षष्ठांशं पुण्यपापानां उपद्रष्टा दशांशकम्॥ १७॥ यद्दत्तात्कारयेत्कर्म नाम्नि मस्यैष यच्छति॥ विनाभृत्यकशिष्याभ्यां
षष्ठांशं पुण्यमाहरेत्॥ १८॥ व्यवहारात्तथा प्रीत्या नित्यं संभाषणादिभिः॥ दशांशं पुण्यपापानां लभते नात्र संशयः
॥ १९॥ अत्रैवोदाहरंतीममितिहासं पुरातनम्॥ वाराणस्यां कर्मदत्तो भरद्वाजकुलेऽभवत्॥ २०॥ वेदवेदांगवित्स-
ज्योजपध्यानपरायणः॥ सुशीला नाम तद्भार्या सुशीला तरुणी शुभा॥ २१॥ एकदंतः सुतः सोऽपि सर्वविद्या मधी
तवान्॥ तारुण्यं स वयः प्राप्य कामाविष्टस्तदाभवत्॥ २२॥ तस्य रूपावली भार्या चतुरातीवसुंदरा॥ पतिव्र
ता पित्तां हित्वा सोऽपि कामवशं ययौ॥ २३॥ परस्त्रीव्यसनात्तेन बहुद्रव्यं विनाशितम्॥ पितुर्दुःखभयाल्लोकान्नो
चुः किंचिच्छुभाशुभम्॥ २४॥ मात्रा निवारितो भूयो व्यसनं सोऽत्यजन्न च॥ ततश्च पतितं भार्या धिक्करोति सु
हृज्जनः॥ २५॥ महापातकसक्तेन परस्त्रीव्यसनाय सः॥ परस्त्रीव्यसनासक्त्या वयोनीतमजानता॥ २६॥
बहुभिः शिक्षितं नैव करोति च विमोहितः॥ ततश्चौर्यं समारब्धं परस्त्रीसुखलब्धये॥ २७॥ ततो लोकैश्च-
तज्ज्ञातं भीत्या काश्याः पलायितः॥ एकदंतस्तदा चिंतामुपलेभे कयाम्यहम्॥ २८॥ मार्गेनभिज्ञो गच्छन्सर्वा
न्देशान्विलोकयन्॥ देशाद्देशांतरं गच्छन्यमुनातीरमागतः॥ २९॥ स्नानार्थं कार्तिके मासि तत्र लोकाः स- ३८
मागमन्॥ कार्तिकव्रतिनस्तत्र नानादेशसमागतान्॥ ३०॥ नरान्ददर्श स्त्रीश्चापि सुरूपा वयसान्विताः॥

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

सदृष्ट्वाकौतुकंपश्यन्मासमेकमुवासह॥३१॥नतन्मध्येकोपिजनश्चेष्टितंतस्यदुर्मतेः॥संध्याकालेभ्रमंस्तत्रस्त्रीणांद
र्शनलालसः॥३२॥ददर्शब्राह्मणांस्तत्रजपदेवार्चनेस्थितान्॥कांश्चित्पुराणपठतःकांश्चित्तच्छ्रवणेरतान्॥३३॥
नृत्यतोगायतःकांश्चिद्विष्णुस्तवनतत्परान्॥तुलसीधारिणःकांश्चिद्विष्णुमुद्रांकितान्परान्॥३४॥नित्यंपरि
भ्रमंस्तत्रदर्शनस्पर्शभाषणैः॥पुण्यात्मनांजनानांचपापंतस्यक्षयंययौ॥३५॥पौर्णिमास्यांततोपश्यद्विप्र
गोपूजनादिकम्॥दक्षिणाभोजनाद्यंचदीपदानादिकंतथा॥३६॥रात्रौदीपोत्सवंपश्यन्परस्त्रीकामुकः
सतु॥ततोर्धरात्रसमयेराजन्यस्यस्त्रियंबलात्॥३७॥जग्राहचालिलिंगासौदृष्टस्तत्पतिनातदा॥दृष्टमात्र
स्तुतेनाथतांविहायपलायितः॥३८॥एकदंतस्यमार्गेचसर्पोध्रिर पतत्तदा॥पृदाकुनाततोदष्टःसद्योमृतिमुपा
ययौ॥३९॥बहवोमीलितास्तत्रवैष्णवाःपुण्यशालिनः॥एकदंतोद्विजःसोयंदष्टःसर्पेणदैवतः॥४०॥किंकरि-
ष्यतियद्भाविनतत्केनापिवार्यते॥इत्यूचुरामरामेतिकेचिद्विष्णोशिवेतिच॥४१॥कर्णेजपस्कृतारेणस्वरेण
करुणान्विताः॥केचित्तुलसीमिश्रंजलंचिक्षिपुरादरात्॥४२॥यमदूतैस्तदाबद्धस्ताडितोनेकधाततः॥
यमस्यसंन्निधौनीतस्तंदृष्ट्वासूर्यनंदनः॥४३॥अब्रवीच्चित्रगुप्तंवैकिमस्यदुष्कृतंकृतम्॥ ॥चित्रगुप्तउवाच॥
॥जानतानेनविप्रेणकृतंकर्माशुभंबहु॥४४॥तस्मान्निरयवासाययोग्योयंनास्तिसंशयः॥चित्रगुप्तवचः
श्रुत्वायमःप्रेतपमब्रवीत्॥४५॥ ॥यमउवाच॥ ॥प्रेतपैनंद्विजंशीघ्रंनरकेविनिपातय॥प्रेतपस्कततोधृत्वात
विप्रंनरकेनयत्॥४६॥नानाभयानकान्दृष्ट्वानरकांस्तेनवैतदा॥भयकंपितआहेदंवृथाजन्मविनाशितम्
॥४७॥प्रेतपेनततश्चोक्तंनरकान्क्रमशोविश॥यदासौनाविशत्तत्रतैलतप्तेकटाहके॥४८॥कुंभीपाकाभि

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



क्षिप्तः प्रेतपेन हहा तदा ॥ प्रक्षिप्तोपि द्विजो नासौ वेदनामाप कामपि ॥ दृष्ट्वाश्चर्यं यमा योक्तं प्रेतपेन कुतूहलात् ॥
५०॥ कुंभीपाके परिक्षिप्तः सुखमास्ते यथा ह्रदे ॥ जलस्थ धर्मतप्तोहि यथा यमभवद्द्विजः ॥ ५१॥ तच्छ्रुत्वा धर्मराजो
पि किमिदं कस्य कर्मणः ॥ फलं विचारयेद्यावत्तावत्तत्र समागतः ॥ ५२॥ नारदः सर्वदर्शी च यमं प्रोवाच सादर
म् ॥ ॥नारद उवाच॥ ॥ एकदंतः समानेयो नायमर्हति यातनाम् ॥ ५३॥ अनेन किल कालिंद्यामूर्जे मासि
मागतैः ॥ स्नानार्थं सज्जनैः सार्द्धं मासः सर्वोतिवाहितः ॥ ५४॥ तेन पुण्यप्रभावेन क्षीणं पातकमस्य वै ॥ अतः
प्रदर्श्य नरकान्नेयोसौ स्वर्गमेव हि ॥ ५५॥ ततो नारदवाक्येन दर्शयित्वा द्विजस्य तु ॥ नरकान्बहुदुःखाढ्या
नेकाशीतिप्रभेदकान् ॥ ५६॥ ततो नीतः स्वर्गमसौ पुण्यभोगाय देववत् ॥ अतः संसर्गजं पुण्यं पापं वापि भवे
ध्रुवम् ॥ ५७॥ तस्मात्सतां संगतये यतितव्यं सुधीमता ॥ असत्संगाद्यतः पुण्यमर्जितं च विनश्यति ॥ ५८॥ इति
हासमिमं श्रुत्वा शुभं प्राप्नोति मानवः ॥ एष सत्संगमहिमा उक्तोन्यत्किं विवक्षितम् ॥ ५९॥ इति सनत्कुमारसं
हितायां कार्त्तिकमासमाहात्म्ये पंचविंशतितमोऽध्यायः ॥ ॥अत्रेय उवाच॥ ॥ईदृशं कार्तिकव्रतमल्पाया
संमहत्फलम् ॥ न कुर्वंति जनाः केचित्किमर्थं मुनिसत्तम ॥ १॥ ॥कुमार उवाच॥ ॥ स्वसृष्टिं द्वयं वेधा धर्मा
धर्मौ ससर्ज ह ॥ धर्ममेवानुतिष्ठंतः प्राप्नुवंति शुभां गतिम् ॥ २॥ अधर्ममनुतिष्ठंतो यांति ते धोगतिं नराः ॥ पु
ण्यकर्मफलं नाको नरकस्तद्विपर्ययः ॥ ३॥ तयोः पालनकर्त्तारौ द्वावेव विधिना कृतौ ॥ शतक्रतुयमौ तौ च पु
ण्यपापानुसारिणौ ॥ ४॥ गुरुतल्पादयः पुत्राः कामस्य प्रथिता भुवि ॥ क्रोधस्य पितृघातादाः लोभस्य तन- 
या शृणु ॥ ५॥ ब्रह्मस्वहरणाद्याश्च एते नरकनायकाः ॥ कृता यमेन ते व्याप्ता मनुजान्हि कुर्वते ॥ ६॥ व्रतादि

Digitized by Sarayu Foundation Trust, Delhi and eGangotri

ध ॥ अश्रद्धा चैव दुर्मेधा अविद्यायाः कृते उभे ॥७॥ श्रद्धा मेधा विद्या तिस्त्रो वर्त्तंते शुविस
वेदा जः श्रीविष्णोः श्रवणादिकम् ॥८॥ न करोति सुदुर्मेधा येनांधं याति वै तमः॥ ॥आत्रेय
उवाच॥ नादावशक्तः सिद्धिभाक् कथम् ॥९॥ कथं विमुच्यते जंतुर्दुःखसंसारसागरात् ॥
॥ ॥सनत्कुमार उवाच॥ ॥शृणुयादूर्जमाहात्म्यं नियमेन शुचिः पुमान् ॥१०॥ संपूर्णमथवाध्यायमेकश्लो
कमथापि वा ॥ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥११॥ मुहूर्तं वापि शृणुयात्कथां पुण्यां दिने
दिने ॥ यदि प्रतिदिनं श्रोतुमशक्तः स्याच्च मानवः ॥१२॥ पुण्यमासे थवा पुण्यतिथौ संशृणुयादपि ॥ तेन पुण्य
प्रभावेन पापान्मुक्तो भवेन्नरः ॥१३॥ पुराणज्ञः शुचिर्दक्षः शांतो विगतमत्सरः॥ साधुः कारुणिको वाग्मी
वदेत्पुण्यां कथां सुधीः ॥१४॥ व्यासासनं समारूढो यदा पौराणिको भवेत् ॥ आसमाप्तेः प्रसंगस्थ नमस्कुर्या
न्न कस्यचित् ॥१५॥ न दुर्जनसमाकीर्णे न शूद्रश्वापदावृते ॥ देशे न द्यूतसदने वदेत्पुण्यकथां सुधीः ॥१६॥
श्रद्धाभक्तिसमायुक्ता नान्यकार्येषु लालसाः॥ वाग्यताः शुचयो दक्षाः श्रोतारः पुण्यभागिनः॥ १७॥ अ-
भक्ता ये कथां पुण्यां शृण्वंति मनुजाधमाः॥ तेषां पुण्यफलं नास्ति दुःखं स्याज्जन्मजन्मनि ॥ १८॥ पौरा-
णिकं च संपूज्य गंधवस्त्रादिभिः शुभैः॥ शृण्वंति च कथां भक्त्या न दरिद्रा न पापिनः ॥१९॥ कथायां कीर्त्यमानायां
ये गच्छंत्यन्यतो नराः॥ भोगांतरे प्रणश्यंति तेषां दाराश्च संपदः॥ २०॥ उच्चासनसमारूढो न नरः प्रणतो भवे
त् ॥विषवृक्षस्तथा स्वापे वने चाजगरो भवेत् ॥२१॥ कथायां कीर्त्यमानायां विघ्नं कुर्वंति ये नराः॥ कोट्यब्द —
नरकान्भुक्त्वा भवंति ग्रामशूकराः॥ २२॥ ये श्रावयंति मनुजाः कथां पौराणिकीं शुभाम् ॥ कल्पकोटिशतं

Digitized by Sarayu Foundation Trust, Delhi and eGangotri



साग्रंतिष्ठंतिब्रह्मणः पदे॥ २३॥ आसनार्थंप्रयच्छंतिपुराणज्ञस्ययेनराः॥ कंबलाजिनवासांसिमंचंफलक
मेववा॥ २४॥ परिधानायवस्त्राणिप्रयच्छंतिचयेनराः॥ भूषणादिचयच्छंतिवसेयुर्ब्रह्मसद्मनि॥ २५॥
वाचकेपरितुष्टेतुतुष्टास्युःसर्वदेवताः॥ अतःसंतोषयेद्भक्त्याभक्तिश्रद्धान्वितः पुमान्॥ २६॥ तस्यपुण्य
फलंपूर्णंभवत्येवनसंशयः॥ यत्फलंसर्वयज्ञेषुसर्वदानेषुयत्फलम्॥ २७॥ सकृत्पुराणश्रवणात्तत्फलंविं
दतेनरः॥ कलौयुगेविशेषेणपुराणश्रवणादृते॥ २८॥ नास्तिधर्मःपरःपुंसांनास्तिमुक्तिपथःपरः॥ पुराण
श्रवणाद्विष्णोर्नास्तिसंकीर्तनात्परम्॥ २९॥ यएतदूर्जमाहात्म्यंशृणुयाच्छ्रावयेदपि॥ सतीर्थराजबदरी
गमनस्यफलंलभेत्॥ ३०॥ सर्वरोगापहंसर्वपापनाशकरंशुभम्॥ धनधान्यकरंमुक्तेर्निदानंकार्त्तिकव्रतम्॥
३१॥ विष्णुप्रीतिकरन्नानावांछितार्थफलप्रदम्॥ यःकरोतिनरोभक्त्यातस्यपुण्यफलंमहत्॥ ३२॥ इति
सनत्कुमारसंहितायांकार्तिकमासमाहात्म्येषड्विंशतितमोध्यायः॥ २६॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥

...लनाकोनर...
॥...पानुसारिणो॥ ४॥ ...टीशब्दोच्चावर्धनकरयाणीं आपले छापखान्यात छापिलें॥ शके १७७६ आनंदनामसंवत् ५०
...ा छुणु॥ ५॥ ब्रह्मस्वहर...

